# CHAMPURAMAYANA

A POEM

in Prose and verse

BY

BHOJA RAJA,

EDITED

BY

*PANDIT JIBANANDA VIDYASAGARA B. A.*

*Superintendent, Free Sanskrit College.*



CALCUTTA.

Printed at the Saraswati Press.

1878.

To be had from Pandit Jibananda Vidyasagara B. A.
*Superintendent, free Sanskrit College, Calcutta.*

## पण्डित-कुलतिलकपूज्यपाद श्रीमत् तर्कवाचस्पति पाद-प्रणीत-प्रकाशित-पुस्तकान्येतानि

१ आशुबोध व्याकरणम् ३।
२ धातुरूपादर्शः २
३ शब्दस्तोम महानिधिः (संस्कृत अभिधान) १०
४ सिद्धान्तकौमुदीसरलाटीकासहिता ११
५ सिद्धान्तविन्दुसार (वेदान्त) ॥०
६ तुलादानादिपद्धतिः (वङ्गाक्षरैः) ४
७ गयाश्राद्धादि पद्धतिः १
८ शब्दार्थरत्न ।॥०
९ वाक्यमञ्जरी (वङ्गाक्षरैः) ।०
१० छन्दोमञ्जरी तथा वृत्तरत्नाकर सटीक ॥=
११ वेणीसंहार नाटक सटीक १
१२ मुद्राराक्षस नाटक सटीक १॥०
१३ रत्नावली सटीक ।॥०
१४ मालविकाग्निमित्र सटीक १॥०
१५ धनञ्जय विजय सटीक ।०
१६ महावीरचरित १॥०
१७ साङ्ख्यतत्त्वकौमुदी सटीक २
१८ वैयाकरणभूषणसार ।॥०
१९ लीलावती ।॥०
२० बीजगणित १
२१ शिशुपालवध सटीक (माघ) ४
२२ किरातार्जुनीय सटीक २॥०
२३ कुमारसम्भव पूर्वखण्ड सटीक ॥।०
२४ कुमारसम्भव उत्तरखण्ड ॥०
... ष्टकम् पाणिनीयम् ।॥०

२६ वाचस्पत्यम् (संस्कृत वृहदभिधान) १२०
२७ कादम्बरी सटीक ४
२८ राजप्रशस्ति =
२९ अनुमानचिन्तामणि तथा अनुमानदीधिति ४
३० सर्वदर्शनसंग्रह १
३१ भामिनीविलास सटीक १
३२ हितोपदेश सटीक १
३३ भाषापरिच्छेदमुक्तावलीसहित १
३४ बहुविवाहवाद ।०
३५ दशकुमारचरित सटीक १॥०
३६ परिभाषेन्दुशेखर ।॥०
३७ कविकल्पद्रुम (वोपदेवकृत) ॥०
३८ चक्रदत्त (वैद्यक) १॥०
३९ उणादिसूत्र सटीक २
४० मेदिनी कोष १
४१ पञ्चतन्त्रम् (श्रीविष्णुशर्मणा सङ्कलितम्) २॥०
४२ विद्वन्मोदतरङ्गिणी (चम्पूकाव्य) ॥
४३ माधवचम्पू ।=
४४ तर्कसंग्रह (इंराजी अनुवाद सहित) ॥
४५ प्रसन्नराघव नाटक (श्रीजयदेव कवि विरचित)
४६ विवेक चूड़ामणि (श्रीमत् शङ्कराचार्य विरचित) ।=

# चम्पूरामायणम् ।

विदर्भाधिपतिना

श्रीभोजनृपतिना

विरचितम् ।

बि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण

संस्कृत्य प्रकाशितम् ।


कलिकाता नगरे

सरस्वती यन्त्रे

मुद्रितम् ।

इं १८७८ ।

# अथ चम्पूरामायणम् ।

लक्ष्मीं तनोतु सुतरामितरानपेक्ष-
मङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं
विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥ १ ॥
उर्वी गतिर्जगति सिध्यति धर्मतश्चेत्-
तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चे-
त्तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥ २ ॥
वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशै-
स्तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः
किं तर्पणं न विदधाति जनः पितॄणाम् ॥ ३ ॥
गद्यानुबन्धरसमिश्रितपद्यसूक्ति-
र्हृद्या हि वाद्यकलया कलितेव गीतिः ।
तस्माद्दधातु कविमार्गजुषां सुखाय
चम्पूप्रबन्धरचनां रसना मदीया ॥ ४ ॥
वाचं निशम्य भगवानथ नारदस्य
प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।
माध्यन्दिनाय नियमाय महर्षिसेव्यां
पुण्यामवाप तमसामसमां निहन्त्रीम् ॥ ५ ॥

तत्र कञ्चन क्रौञ्चमिथुनादेकं पञ्चशरशरानुविद्धमपि

व्याधनानुविद्धं निध्यायतः करुणानुकम्पस्य भगवतो वाल्मीके-र्वदनारविन्दाच्छन्दोमयी काचिदेवं निःससार सरस्वती ।

मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ ६ ॥

तदनुसमयोचितकृत्यं निर्वर्त्य स्वाश्रममुपगतवति सति भगवति वाल्मीकौ ।

वाणी विलासमपरत्र कृतोपलम्भ-
मम्भोजभूरमहमान इवाविरासीत् ।
आभाति यत् कृतिरनेकविधप्रपञ्च-
व्यामिश्रजालविधिसाधकपिञ्छिकेव ॥ ७ ॥

ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी-मध्यमणीवोऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपदिष्ट-मानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

अथ सरसिजयोनेराज्ञया रामवृत्तं
करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ।
शुभमतनुत काव्यं स्वादु रामायणाख्यं
मधुमय भणितीनां मार्गदर्शी महर्षिः ॥ ८ ॥

एनं प्रबन्धं प्रयोक्तुं लोके कः समर्थ इति चिन्तामुप-गतवति सति भगवति वाल्मीकौ ।

उपागतौ मिलितपरस्परोपमौ
बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ ।
विचक्षणौ विविधनरेन्द्रलक्षणौ
कुशीलवौ कुशलवनामधारिणौ ॥ ९ ॥

एतौ मुनिः परिगृह्य स्वकृतिं अपाठयत् । तौ पुनः इतस्ततो गायमानौ दृष्ट्वा रामः प्रहृष्टमनाः स्वभवनमानीय भ्रातृभिः सह निजचरितं गातुमन्वयुङ्क्त । ततश्च ।

छन्दोमयीनां निलयस्य वाचां मन्त्रिवसन्तौ मुनिसत्तमस्य ।
एतौ कुमारौ रघुवीरवृत्तं यथाक्रमङ्गातुमुपक्रमेताम् ॥ १० ॥

अस्ति प्रशस्ता जनलोचनानामानन्दसन्दायिषु कोसलेषु ।
आशासमुत्सारितदानवानां राज्ञामयोध्येति पुरी रघूणाम् ॥ ११ ॥

तामावसद्दशरथः सुरवन्दितेन
संक्रन्दनेन विहितासनसंविभागः ।
वृन्दारकारि विजयी सुरलोकलब्ध-
मन्दारमाल्यमधुवासितवासभूमिः ॥ १२ ॥

अथास्मिन्ननपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः सह मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना महर्षेरङ्गदेशसङ्गतावग्रहनिग्रहशौण्डस्य विभाण्डकसूनोरवश्यमृष्यशृङ्गस्य प्रभावात् प्रभवो भविता कुमाराणामिति सनत्कुमारोक्तं पुरावृत्तमस्मै दशरथाय कथयामास । सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ता कुटुम्बिनं सम्बन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत । तदनु हविराहरणाय धरण्यां कृतावतरणाः सर्वे गीर्वाणाः शक्रप्रमुखाश्चतुर्मुखाय दशमुखप्रतापानलशोषोषसंशोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वानाः कृतनानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमाविदुः ।

सन्तापघ्नं सकलजगतां शार्ङ्गचापाभिरामं

लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यं
कारुण्यापं त्रिदशपरिषत्कालमेघं ददृशुः ॥ १३ ॥
क्षीराम्बोधेर्जठरमभितो देहभासां प्ररोहैः
कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने कामपि क्षौमगौरे
निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥ १४ ॥
प्रह्लादस्य व्यसनमभितं दैत्यवर्गस्य दर्पं
स्तम्भं वज्रस्थलमपि रिपोर्योगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे
दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥
नारायणाय नलिनायतलोचनाय
नामावशेषितमहाबलिवैभवाय ।
नानाचराचरविधायकजन्मदेश-
नाभीपुटाय पुरुषाय नमः परस्मै ॥ १६ ॥
इति प्रणम्योत्थितानेतान् स्तुतिरवमुखरितहरिन्मुखान्
हरिहयप्रमुखानखिलानमरगणानरुणतामरसविलासचो-
रैर्लोचनमरीचिवीचिसञ्चारैरानन्दयन्नरविन्दलोचनः स्फुट-
मभाषत ।
अपि कुशलममर्त्याः ! स्वागतं साम्प्रतं वः
शमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
अपि धिषणमनीषा निर्मिता नीतिमार्गा-
स्त्रिदशनगरयोगक्षेमकृत्ये क्षमन्ते ॥ १७ ॥
एवं भगवतः कुशलानुयोगपुरःसरीभूतासारसरसां

आस्ते ससंभ्रमं च मज्जनपरिहृते मज्जनदृढाभिमुखे नि-
श्चितपञ्चमुखे दशमुखे तनुत्वविचित्रतरजातरूपशलाका-
प्रत्यग्रप्रत्युप्तस्फटिकशिलाशालभञ्जिकापुञ्जकरतलकलितनि-
जोपलमयकलशमुखाहृच्छाच्छामविच्छिन्नपाताम्बुधारां निज-
कराभिमर्शादापादयन् तस्य प्रसादमपिबमानां शुनासीर-
चिरकाङ्क्षितानां विंशतिश्रवणानां श्रवणमात्रं पात्रं भवति।
तेन पुलस्त्यनन्दनेन संक्रन्दननन्दनवनात् स्वमन्दिरोद्यान-
मानीतस्य मन्दारप्रमुखस्य वृन्दारकतरुवृन्दस्य वन्दीकृत-
सुरसुन्दरीनयनेन्दीवरद्वन्द्वात् तत्कारारविन्दजनककलशाच्च
मन्दोष्णं स्यन्दमानैरम्बुभिर्जम्बालितालवालस्य पचेलि-
मानामपि कुसुमानां पतनभयमाशङ्कमानाः पवमानाः
सततं परिस्पन्दितुमपि प्रभवो न भवन्ति। एतेऽपि पावका
रूढिशब्दौ हुतवहाख्यां वहन्तस्तद्गृहे गार्हपत्यपुरः-
सराः पौरोगवीं धुरं दधति। किं बहुना। स एष मान-
वादवमान आगमिष्यतीत्यमत्वा नस्तदितरैरवध्यत्वं चतुरा-
ननवराल्लब्ध्वा समुद्यतः सम्प्रति सम्प्रहारसमाक्रान्तदिगन्त-
दन्तावलदन्तकुन्तव्रणकिणस्यपुटितवक्षःस्थलस्थलकमलिनीं
वनवारण इव रावणस्त्रिलोकीमभिभवन् भवदीयानित्य-
स्मान् न जातु किञ्चिदपि जानातीति। अथ भगवानाकर्ण्य
गीर्वाणगणवाणीम्।

इन्दुनीलाचलोदञ्चच्चन्द्रिकाधवलस्मितः।
वाचमूचे सुधाधारामधुरां मधुसूदनः॥ २२॥

भवतामपराधविधायिनस्तस्य यातुधानस्य निधनमधु-
नैव विधातुं शक्यम्। किन्तु सरसिजासनशासनमप्यमोघी-

कुर्वन्नुर्व्वीतले पुत्रीयतः सुत्रामभिनस्य दशरथस्य मनोरथमपि पूरयितुमाहतमानुषवेषः सन् अहमेव तं बधिष्यामी-त्युच्चाम्लरधात्। ततः सा परिषदनिमिषाणामुन्मिषितहर्षाणां हृषीकेशादेशात् प्रशमितदुर्दशानि निर्दंशामनानि चतुर्दशभुवनानि बुद्धा दुग्धसागराविरगात्। ततस्तानमरान् प्राह स पितामहः। भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानरभल्लगोपुच्छवेषभृतः प्रथितप्रभावाः प्रजाः प्रजनयेयुरिति। पुरा खलु मम जृम्भारम्भे सम्भूतो जाम्बवानिति। ततस्ते गीर्वाणास्तथा कुर्वन्। अथ वैतानाद्वैश्वानरान् नरः प्राजापत्यः स्वहेमपात्रः कश्चिदुत्थाय दशरथाय पुत्रीयते पायसममृतप्रायं प्रायच्छत्। ततः।

कौसल्यायै प्रथममदिशद् भूपतिः पायसार्द्धं
प्रादादर्द्धं प्रणयमधुरं केकयेन्द्रस्य पुत्त्र्यै।
एते देव्यौ तरलमनसः पत्युरालोच्य भावं
स्वार्द्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम् ॥२३॥

अवभृथेऽवसिते सरयूतटादथ यथायथमुच्चलिते जने।
दशरथः परिपूर्णमनोरथः पुरमगात् पुरुहूतपुरीपमाम् ॥२४॥

अपाटवात् केवलमङ्गकानां मनोज्ञकान्तेर्महिषीजनस्य।
शनैः शनैः प्रोषितभूषणानि चक्राशिरे दौहृदलक्षणानि ॥२५॥

मन्दमन्दमपयाद्दलित्रयी गाधताविषयनाभिगह्वरा।
कोसलेन्द्रदुहितुः शनैरभून्मध्ययष्टिरपि दृष्टिगोचरा ॥ २६ ॥

न्यग्रोधपत्रसमतां क्रमशः प्रयाता-
मङ्गीचकार पुनरप्युदरं लग्नाङ्ग्याः।

जीवातवेदृग्मनुजीरगणपीड़ितानां
गर्भच्छलेन वसता परमेण पुंसा ॥ २७ ॥

अपि च।

मध्यं तनुत्वादविभाव्यमानमासाद्यमासीदसिताय ताक्षाः।
गर्भोदये विष्णुपदापदेशात् कार्श्यं विहायापि विहाय एव॥२८॥

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणे-
राविर्भूतमभूतपूर्वमभवत् किञ्चिदेकं महः ॥२९॥

अपिच। अथ रामाभिधानेन कवेः सुरमयन् गिरः।
धर्मं चकार कारुण्याद्रघूणामन्वयं हरिः ॥ ३० ॥
तमेवमन्वजायन्त त्रयस्ते ताग्नितेजसः।
अग्रजन्तेऽनुकुर्वन्तस्तैस्तैर्लोकोत्तरैर्गुणैः ॥ ३१ ॥
भरतस्तेषु कैकेय्यास्तनयो विनयोज्ज्वलः।
अन्यौ लक्ष्मणशत्रुघ्नौ सुमित्रायां कृतोदयौ ॥ ३२ ॥
एते वव्रुधिरे वीराः प्रजाक्षेमाय दीक्षिताः।
लोकानन्दा मुकुन्दस्य चत्वार इव बाहवः ॥ ३३ ॥

अथ कदाचिदपरिमेयमायाभयानकयुद्धसमुद्धतदैत्य-बलावस्कन्दकान्दिशीकवृन्दारकानीकप्रतिपाल्यमानमहारथः पङ्क्तिरथस्तपश्चर्याजातानामाश्चर्याणामायतनं त्रिशङ्कुयाजिनं भगवन्तं पद्यप्रबन्धमिव दर्शितसभेदं प्राकृतव्याकरणमिव प्रकटितवर्णव्यत्यासं बुधमिव सोमसुतं कुशिकसुतमद्राक्षीत्। तदनु यथाविधि परिगृहीतसपर्येण मर्यादातीतमहिम्ना गाधितनूद्भवेन गाधिनन्दनेन सत-

परित्राणार्थमित्यमभ्यर्थितः पार्थिवोऽभूत् । राजन् ! तव कुमारेण विनयाभिरामेण रामेण ग्ररासनमित्रेण सौमित्रिमात्रपरिजनेन क्रियमाणक्रतुरक्षो रक्षोदुरितमुत्तीर्य्य-कृतार्थश्चो भवितुमभिलषामीति । एवंविधमाकर्ण्य कर्णपरुषं महर्षिभाषितं प्रतिमात्रपुत्रवात्सल्यात् कौशल्याजानिः समस्थान्तःकरणोऽभूत् । ततस्तस्मिन् बहुप्रकारैरपरिहार्य्यनिश्चये भगवति विश्वामित्रे दशरथ-स्वपनक्रुत्तहितेन पुरोहितेनैवमभिहितोऽभूत् ।

पर्याप्तकामाय भवानमुष्मै कुर्यात् सपर्य्यां कुशिकात्मजाय ।
निर्यातुधानां वसुधां विधातुं निर्यातु रामः सह लक्ष्मणेन ॥३४॥

एवं वसिष्ठेन प्रतिष्ठापितधृतिर्दशरथः सुतप्रदानेन कुशिकसुतमनोरथमेव पूरयामास ।

योगेन लभ्यो यः पुंसां संसारापेतचेतसाम् ।
नियोगेन पितुः सोऽयं रामः कौशिकमन्वगात् ॥३५॥
तत्र सत्रं परित्रातुं विश्वामित्रो महामुनिः ।
सौमित्रिसहितं रामं नयन्नयमवोचत ॥ ३६ ॥
बलेन तपसा लब्धे बलेत्यतिबलेति च ।
विद्येते मयि काकुत्स्थ ! विद्ये ते वितरामि ते ॥३७॥

ततः परिगृहीतविद्यस्य दाशरथेः प्रदेशमेकं प्रदर्श्य भगवानित्यमकथयत् ।

अस्मिन् पुरा पुरभिदः परमेश्वरस्य
फालान्तरालनयनज्वलने मनोभूः ।
सद्यः प्रपद्य शलभत्वमनुष्वदङ्ग
तस्मादमुं जनपदं विदुरङ्गसंज्ञम् ॥ ३८ ॥

तदनु मानससरःप्रसूतां सरयूमतिक्रम्य वृत्रवधप्रवृद्धवृजिनश्रवःपङ्कक्षालनलब्धमलदकरूषकनाम्नोर्जनपदयोः सौमित्रिसुतपदयोर्दाशरथी पुनरप्येवमब्रवीत् ।

यक्षः सुकेतुर्द्रुहिणप्रसादाल्लेभे सुतां कामपि ताटकाख्याम् ।
सुन्दः किलैनां परिणीय तस्यां मारीचनीचं जनयाम्बभूव ॥ ३९ ॥

एकदा तु सुन्दे निहते मारीचः कुम्भसम्भवमुनिमभिभूय तस्य शापादवाप कौणपतां ताटकाप्यासीत् पुरुषादिनी । सेयमाजन्मसिद्धसिन्धुरसहस्रप्राणा जनपदविपदं विदधाना व्यापादनीया त्वयेति । किञ्च । वैरोचनीं मन्थरां वसुन्धरापराधधुरन्धरां पुरन्दरेण निहतां जनार्दनकृतार्दनाञ्च भार्गवजननीं प्रदर्श्य दाशरथेरमर्षी सुन्दवधूवधविचिकित्सामुत्सादयामास ।

प्राक्श्रुतः श्रुतवृत्तेन तेन सुन्दप्रियावधः ।
तमेवान्वदधात्तस्य चापः शिञ्जारवच्छलात् ॥ ४० ॥

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुनेरध्वानं तरसा रुरोध रुधिरश्चोदारुणा दारुणा ।
स्वाधीने हनने पुरीं विदधती मृत्योः स्वकृत्यात्ययात्
उत्किञ्चत्सङ्कटमहाशृङ्गाटकां ताटका ॥ ४१ ॥

यथा दाशरथेः कर्णमविशत्ताटकागुणः ।
तथा धनुर्गुणस्तूर्णमविशत्त्जिघांसया ॥ ४२ ॥

ततो भाविनि संग्रामे वत्सस्य ताटका ।
स्वप्राणैः रामबाणस्य वीरपानमकल्पयत् ॥ ४३ ॥

मुनिः कृशाश्वोपज्ञानि ताटकामाथिने ददौ ।
अस्त्राणि जृम्भकादीनि जम्भशासनशासनात् ॥४४॥

तत्र कश्चन विरिञ्चिलोकप्रत्यादेशं प्रदेशमेकं प्रदक्षी-णीवदुपचीयमानपरमहर्षो महर्षिः ।

प्रतिदिनमवदातैर्ब्रह्मभिर्ब्रह्मनिष्ठैः
प्रशमितभवखेदैः सादरं सेव्यमानः ।
वलिनियमनहेतोर्वामनः काननेऽस्मिन्
बलिनियमपरः सन् ब्रह्मचारी चचार ॥४५॥

अपि च

अपहृतविबुधार्तैर्वामनव्याजमूर्ते-
रखिलभुवनभिक्षोराश्रमानोकहानाम् ।
ततिरियमतिनीला व्याप्तदिग्व्योमसीमा
स्वयमपि परिमातुं लोकमभ्युद्यतेव ॥ ४६ ॥

इति विविधरसाभिः कौशिकव्याहृताभिः
श्रुतिपथमधुराभिः पावनीभिः कथाभिः ।
गलितगहनखेदं गच्छतोर्दाशरथ्योः
समकुचदिव सद्यस्तादृशं मार्गदैर्घ्यम् ॥ ४७ ॥

ततः सिद्धाश्रमं प्रविश्य विश्वामित्रः सवनमारभत । तदनन्तरमन्तरीक्षात्तरलादापतन्तमन्तकानीकभयानकं पलाशगणमवलोक्य पलायमानाः करतलगलितपलाशसमित्कुशाः कुशिकनन्दनान्तेवासिनः ससंभ्रममभिलषितात्राणाय रामभद्राय न्यवेदयन् ॥

रक्ताद्रैः शिखराणि तानि परितः सिक्त्वा हसित्वा क्रुधा
कृत्वा खड्गविघट्टनं तत इतः क्षिप्त्वा नटित्वा मुहुः ।
विद्युत्कार्मुकजालजालकतया मध्ये कृशान् खेचरान्
रक्षोऽग्नेः सहसा इमा निशिचरी व्यातिष्ठमूर्ध्वं दिवः ॥[illegible]

तत्र

संक्रान्तवर्णान्तरगाधिसूनोः
सम्पर्कपुण्यादिव रामभद्रः ।
चात्रक्रमात् पिप्पलदण्डयोग्यः
पलाशदण्डाहृतपाणिरासीत् ॥ ४९ ॥

मारीचनीचमतिराहवमाचरण्य-
श्चिप्तः क्षणेन रघुनायकसायकेन ।
मध्ये पयोनिधिभयेन निमग्नमूर्त्ति-
र्वेषं पुपोष जलमानुषनिर्विशेषम् ॥ ५० ॥

सुबाहुराहवोन्मत्तः कृत्तः काकुत्स्थपत्त्रिणा ।
मनोनामनभिप्रेतः प्रेतनाथातिथीकृतः ॥ ५१ ॥

वंशस्पृशा हृदयहारिफलान्वितेन
रामेरितेन रघुनायकसायकेन ।
स्त्रीहान्वितेन निरगादनुरागिणीव
प्राणावली हृदयतः पिशिताशनानाम् ॥ ५२ ॥

अथ निशिचरघाताच्छान्तवैतानविघ्नो
मुनिरवभृथकृत्यं विश्वकृत्यं समाप्य ।
अमनुत जयलक्ष्म्या राममाजौ समेतं
यजनजनितमूर्त्यां यौ तु मध्याजलक्ष्म्या ॥ ५३ ॥

अथ मिथिलां प्रति प्रस्थितो विश्वामित्रः काकुत्स्थयो-रित्थमकथयत् । पुरा खलु कुशेशयासनजन्मा कुशिकाभिधानो राजर्षिः कुशनाभकुशाम्बप्रमुखैस्तनुभिः कौशाम्बी महोदयधर्मारण्यगिरिव्रजाख्यानां पुरीणां कर्तृभिः पुत्री-त्रभवत् । कुशनाभस्तु कन्याशतं घृताच्यामजनयत् । कन्या-

स्ता समुद्यौवनाः कामयमानः पवमानः प्रत्याख्यानात् प्रत्यापन्नमन्युरासामवयवेष्वनार्जवमतनुत। अथ विदित-वृत्तान्तेन कुशनाभेन तेन क्षमामिव प्रतिक्रियां मन्वानेन चूलिसूनवे सोमतेयाय राज्ञे ब्रह्मदत्ताय प्रदत्ताः स्ताः प्रकृतिस्थाः बभूवुः। पुनरपि कुशनाभस्तु पुत्रीयन् पितृ-प्रसादाद्गाधसत्वान् गाधिसंज्ञानसन्ततपादानुदपादयत्। इत्थं दाशरथिः कौशिकोत्पत्तिकथा निशमनेन निराधा मायामिनीमनुभूय बन्धूकस्तवकबन्धुरेण सन्ध्यारागेण प्राचीमुखे शोणीकृते शोणाभिधानं दधाने नदे प्रवर्त्तित-प्रत्यूषः कृत्यः कृतनियमेन मुनिना सह गङ्गामुपतिष्ठमा-नेन पथा प्रातिष्ठत।

आजानपावनचरीं वृषानन्दविधायिनीम्।
श्रुतिप्रणयिनीं सोऽयमापगामापगामिव॥ ५४॥

अथ भागीरथीकथां श्रोतुकामाय रामाय भगवानित्य-मभाषत।

पुरा तु मेनका नाम सुमेरोरभवत् सुता।
गृहमेधी तयैवासीच्चक्रवर्त्ती धराभृताम्॥ ५५॥
कन्याद्वयममुष्यासीदेका मन्दाकिनी तयोः।
अन्या भगवती साक्षाच्चन्द्रचूडकुटुम्बिनी॥ ५६॥
तां नदीं विबुधा लब्ध्वा नाकलोकमनीनयन्।
तपस्यन्तीं गिरिर्गौरीं देवाय महते ददौ॥ ५७॥
शिवयोर्युञ्जतोर्वीर्यं धृत्वा धात्र्या समर्पितम्।
पावकः प्रतिजग्राह दैवतैरनुमोदितः॥ ५८॥
अनपत्यानथामर्त्यान् वसुमा[illegible] च मेदिनीम्।

अकरोदम्बिकाकोपः पुत्रालाभसमुद्भवः ॥ ५९ ॥
अथ तेजान्यमिच्छद्भिरुक्तः सप्तर्षिभिः सुरैः ।
वह्निरङ्गाय जाह्नव्यां न्यषिञ्चद्वीर्यमैश्वरम् ॥ ६० ॥
सापि सर्वार्पिता क्षिप्तं तेजस्तत्सोढुमक्षमा ।
हिमवत्प्रान्तकान्तारे श्रान्ताशरवणे जहौ ॥ ६१ ॥
तत्राभूत् कृत्तिका प्रीत्यै षोढारूढमुखाम्बुजम् ।
तारकाख्यासुरविध्वंसि सद्यः षाण्मातुरं महः ॥ ६२ ॥
वैचित्र्यं श्रूयतां वत्स ! चरितन्त्रिदिवौकसाम् ।
यथोक्तं हव्य मश्नन्त्या देवताया इवाध्वरे ॥ ६३ ॥
पुरीमयोध्यामध्यास्त सावित्रः सगरो नृपः ।
केशिनी सुमतिभ्यां च लङ्घित प्रथमाश्रमः ॥ ६४ ॥
सपुत्रीयन्सपत्नीकस्तपस्तेपे हिमालये ।
भृगुः प्रीतमनास्तस्मै ददौ दायादसम्पदम् ॥ ६५ ॥
असमञ्जसुतं लेभे वैदर्भी केशिनी तयोः ।
षष्टिं पुत्र सहस्राणां सुमतिश्च यवीयसी ॥ ६६ ॥
असमञ्जसचारित्रमसमञ्जमपास्य सः ।
आरब्धहयमेधः सन्नमुञ्चत तुरङ्गमम् ॥ ६७ ॥
क्रव्यादवपुषा सोऽयमहारि हरिणा हयः ।
ततस्तमन्वेष्टुं सौमतेयाः प्रतस्थिरे ॥ ६८ ॥
सर्वं सपर्वतामुर्वीं खनतः सगरात्मजाः ।
चक्रुर्झर्झरितध्वान्तं नागलोकं मखांशुभिः ॥ ६९ ॥
तएते तपसादीप्ते तमस्तोयप्रमाथिनि ।
कापिले ज्वलने वीरा लेभिरे शलभोपमाम् ॥ ७० ॥
असमञ्जसुतं पौत्रमंशुमन्तमथाब्रवीत् ।

भस्मीं कृत्वा समाधत्तां समतनुं भवानिति ॥ ७१ ॥
सोऽपि गत्वा बिलं तत्र दृष्ट्वा भस्मीकृतान् पितॄन् ।
सास्रुस्तेभ्यो जलं दित्सुश्चिरान्लेभे तुरङ्गमम् ॥७२॥
मातुलो गरुडस्तेषामेनं तत्रैवमब्रवीत् ।
गङ्गामिहानयांशुमन्नेषामेषा गतिः परा ॥ ७३ ॥
ततस्तनयवृत्तान्तं श्रुत्वा साश्वतुरङ्गमः ।
समाप्य सगरः सत्रं पुत्रशोकाद्दिवं गतः ॥ ७४ ॥
अथांशुमानयं राज्यं चिराय परिपालयन् ।
दिलीपे न्यस्तभूभारस्तपस्तेपे हिमालये ॥ ७५ ॥
दिलीपेऽपि दिवं याते श्रुत्वा वृत्तं भगीरथः ।
पितॄन् विधातुं सुगतीन् विदधे मतिमान्मतिम् ॥७६॥
अमर्त्यसरितं कर्तुं मेने मर्त्यतरङ्गिणीम् ।
ततो गोकर्णमासाद्य तपस्यति भगीरथे ॥ ७७ ॥
दिवोऽदेवापगां वोढुमन्वमंस्त दयानिधिः ।
अथ वीचीचयच्छन्नदिगन्तगमनान्तरा ॥ ७८ ॥
मग्नाङ्कशङ्खसम्भिन्नतारामौक्तिकदन्तुरा ।
तरङ्गाकृष्टमार्तण्डतुरङ्गाया सितारुणा ॥ ७९ ॥
फेनच्छन्नस्वमातङ्गमार्गणव्यग्रवासवा ।
वात्रिःशाखिशिखोद्वेयनन्दनद्रुमकर्षणा ॥ ८० ॥
एकोदकनभोमार्गदिङ्मूढदिवसेश्वरा ।
आवर्तगर्तसंभ्रान्तविमानप्लवविप्लवा ॥ ८१ ॥
नीलजीमूतशैवालशतलेखाहरित्तटा ।
अवलेपभराक्रान्ता सुरलोकतरङ्गिणी ॥ ८२ ॥
पपात पार्वतीकान्तजटामण्डलगह्वरे ।

अलब्धनिर्गमा शम्भोः कपर्दादमरापगा ॥ ८३ ॥
ददर्श दूर्वाशिखालग्नतुषारकणिकोपमाम् ।
अदृष्ट्वा तान् नदीं तत्र तुष्टाव परमेश्वरम् ॥ ८४ ॥
भगीरथो विधेः क्रौर्यात् परिक्षीणमनोरथः ।
गङ्गा सप्ताकृतिर्जाता न्यपतद्धरमूर्द्धतः ॥ ८५ ॥
तेन स्तुत्वा प्रसन्नेन क्षिप्ता बिन्दुसरस्यपि ।
तासु प्राचीं गतास्तिस्रस्तिस्रः प्राचेतसीन्दिशम् ॥ ८६ ॥
अन्या पितृक्रियोद्युक्ता भगीरथरथानुगा ।
सैषा भागीरथी जह्नोः सत्रवेश्म समावृणोत् ॥ ८७ ॥
तां च पीत्वा ततः शान्तो जह्नौ श्रोत्रेण वर्त्मना ।
तया तटिन्या जाह्नव्या प्रापय्य त्रिदिवं पितॄन् ॥ ८८ ॥
भगीरथः पुरं प्राप परिपूर्णमनोरथः ॥ ८९ ॥

अथ रामरघिशाकर्णितभागीरथीकथस्तां सरितं विलङ्घ्य विशालां पुरीं विलोकयन् कस्येयमिति गाधिनन्दनमपृच्छत्। सोऽप्येवमवोचत्। पुरा खलु सुरासुराणां सुधानिमित्तं मिथोविरोधे प्रवृत्ते मायां विश्वमोहिनीं विश्वरूपः प्रदर्श्य दैतेयनिधनं शतधारपाणिना कारयामास। तेषां तु जननी दितिरतिवेलमभ्युपगतमन्युः शतमन्युशासनं कमपि पुत्रं लब्धुकामा पत्युर्मरीचेर्वचनात् कुशप्लवने सुचिरं तपश्चचार। तां कैतवेन शुश्रूषमाणः शक्रः शतधारपाणिः पादकलितकेशकलापामापन्ननिद्रामपवित्रेति निवर्ण्यावगाहिततदीयजठरः सप्तधा गर्भं निर्भिद्य निर्जगाम। दितिरपि विदिततनयकदना तान्यपि खण्डान्याखण्डलेन सप्तमरुतः कारयित्वा त्रिविष्टपं प्रविष्टा। ततः।

अलम्बुसायामिक्ष्वाकोर्जातः कश्चिन्महीपतिः ।
विशालः स्वेन नाम्नाऽत्र विशालां विदधे पुरीम् ॥८०॥

तदनु ।

तद्वास्तव्येन सुमतिनाम्ना नृपतिना कृतातिथ्यः सराजपुत्रो विश्वामित्रस्तत्र निशीथिनीं नीत्वा मिथिलां प्रतिप्रस्थितः प्रतपसामुत्तमस्य गौतमस्याश्रमं प्रदृश्य तद्वारानुषक्तां कथामित्थमकथयत् ।

अत्रागमद्गौतमधर्म्मदारानमार्य्यजुष्टेन पथा महेन्द्रः ।
क्रुद्धस्ततो निर्वृषणं वृषाणं भार्य्यामदृश्यां च मुनिश्चकार ॥८१॥
वनमेतद्गते रामे शापान्मुक्ता भविष्यसि ।
इत्युक्त्वा गौतमः पत्नीं हिमाद्रिं तपसे ययौ ॥ ८२ ॥
ततो विदितवृत्तान्ते देवतानां गणे तदा ।
पितॄणां प्राभवाल्लेभे मेषस्य वृषणं वृषा ॥ ८३ ॥
तद्दिनामेनसो मुक्तां प्रतिगृह्णातु गौतमः ।
इति तस्याश्रमं भेजे साकं रामेण कौशिकः ॥८४॥

ततः । दुःखे सुखे च रजएव बभूव हेतु-
स्तादृग्विधे महति गौतमधर्म्मपत्न्याः ।
यस्माद्गुणेन रजसा विकृतिं गता सा
रामस्य पादरजसा प्रकृतिं प्रपेदे ॥ ८५ ॥

तस्मिन्नहल्यया कृतमातिथ्यं विश्वामित्रः स राजपुत्रः प्रतिष्ठाय मिथिलोपकण्ठ भुविजातं जनकयजनभवनमभजत । तदनु जनकेन विधिवदभ्यर्चिते तस्मिन् कुशिकसुते निमिकुलपुरोधाः शतानन्दो रघुनन्दनमेवमभाषत ।

तिष्ठन्नुपलाहंत्तौ मुनिरगमद्भावाश्रमं ब्रह्मसूनो

रातिथ्यं तत्र लब्ध्वा निरवधिसुरभिप्राभवादित्यवेत्य ।
सोऽनेन प्रार्थितोऽभूत्तदनु मुनिवरे नाभ्युपेते च क्रुध्यन्
क्रोशन्तीं तां तथैव प्रचुरबलजुषा कां दिशौको बभूव ॥ ८६॥

बहुशस्तबलचकितस्य तपोबलाधिगतविविधायुधनिगमस्य सुरभिनिमित्तं भूयोऽपि समारब्ध समरस्य दिव्यास्त्रपरम्परां ब्रह्मदण्डेन निरुन्धन्निरुन्धतो जानिरवतस्थे। ततोऽयं जातव्यलीकः क्षात्त्रतेजसः परं ब्राह्ममेव महोमहीय इति निश्चित्य तत्सिद्धये दक्षिणस्यां दिशि तीव्रतरं तपश्चचार। अथ सावित्रः क्षत्रियस्त्रिशङ्कुः सशरीरः स्वर्गसिद्धिं प्रार्थयमानो वशिष्ठेन प्रत्याख्यातस्तस्य पुत्रैर्महोदयादिभिर्निबन्ध कुपितैर्दत्तचण्डालभावस्तमेनं शरणमभजत। असावपि तन्मनोरथपूर्तये क्रतुमेकं कर्तुं प्राक्रमत। तत्र समागतेषु ब्राह्मणेषु जिगुप्सया त्रिशङ्कुयजनेनागतान् वशिष्ठपुत्रानयं शापेन श्वभक्षकानकरोत्। तत्र क्रतुभुजां वर्गोऽपि स्वर्गादनवतीर्णः।

अयं महात्मा तपसः प्रभावादारोपयामास दिवं त्रिशङ्कुम् ।
नीलाम्बरं निष्कुतराजवेषं वर्षा निशीथादविशेषवेषम् ॥ ८७॥

ततः।

अपातयत् स्वर्गमुपाश्रयन्तं सञ्जातमन्युः शतमन्युरेनम् ।
ततोऽवलम्ब्यास्य नियोगशङ्कुं लेभे त्रिशङ्कुर्गगने प्रतिष्ठाम् ८८

ततः सर्वगीर्वाणगणे प्रार्थनया परित्यक्तभुवनान्तरनिर्माणकर्माणं तत्र तपः प्रत्यूहः प्रत्यग्रङ्गूत इति पश्चिमायां दिशि पुष्करे पुष्कलं तपश्चरन्तममुमम्बरीष यज्ञपशुविनाशप्रायश्चित्तार्थं बह्वीभिर्गोभिः क्रीत्वा नरपशुतां नीयमानस्ताव-

हरीकस्य मध्यमपुत्रः शुनःशेपः मरयमयाचत । अयं भगवान्निजतनयविनिमयेन रक्षितुमेनमुन्मुखः पराङ्मुखे-भ्यस्तेभ्यो हविष्यन्द्यादिभ्यः शापेन वशिष्ठपुत्र दशां दत्त्वा गाथाद्वयप्रीताभ्यामिन्द्रोपेन्द्राभ्याममम्बरीषं शुनःशेपं च परि-पूर्णमनोरथौ कारयामास ।

ततः तपस्यन्तमेनं मेनका सङ्गतस्तपोभङ्गस्थिरमङ्गी चकार । ततः पश्चात्तापाभिभूतोऽयमुत्तरे भूभृति कौशिकी-तीरे घोरं तपश्चचार । तत जम्भारिप्रहितां रम्भां शैली भवेति शप्त्वा पूर्वस्यां दिशि निरस्तनिःश्वासं तपश्चरत्यमुष्मि-न्नूष्मणा तपोऽग्नेर्दह्यमानमस्तामरसासनः सन्निधाय जितेन्द्रियत्वात् ब्रह्मर्षिरसि वसिष्ठोऽप्येवं व्याहरतु भवन्त-मित्यभाषत ।

असौ वसिष्ठनिर्देशाद् ब्रह्मर्षित्वमविन्दत ।
यथोपनय संस्कारादिजन्मा ब्रह्मवर्चसम् ॥ ९९ ॥
इति जनकपुरोधः श्लाघिता गाधिसूनुः
सह नृपतनयाभ्यां शर्वरीं तत्र नीत्वा ।
विधिवदृदिशदर्घ्यं पुष्पदर्भोपगर्भं
सरसिजदयिताय ज्योतिषे छान्दसाय ॥ १०० ॥

तदनु जनकराजधानीं रामलक्ष्मण विलोकन कौतुका-दनवरतपातितेन विकचकुवलय निचयोपधीयमानमेचक मरीचि वीचि मलिम्लुचेन पौरनारी जनविलोचनरोचिषा कर्वचितनरपति पथां विश्वामित्रः प्रविश्य दशरथतनया वित्थमभाषत । अस्यां खलु नगर्यामारब्धयज्ञस्य राज्ञो जन-कस्य भागधेयात् सीता नामधेय भाजनमजीजनत् कन्या-

रंजं रत्नवर्मा भगवती । तस्याः पुनः किं परं किमपि माहात्म्यम् । यतः ।

यस्याः पृथ्वावसमनुदधिः पीठिका हाटकाद्रि-
र्हारः सिन्धुः सगरतनयस्वर्गमार्गैकबन्धुः ।
क्रीडा शैलः परमपुरुषक्रोडदंष्ट्रा च तस्याः
सीतामातुर्जगति मिथिलां सूतिकागेहमाहुः ॥ १०१ ॥

अत्र सीता विवाहार्थममरैरपि दुष्करम् ।
जनकः कल्पयामास धनुरारोपणं पणम् ॥ १०२ ॥

ततो महर्षिर्जनकस्य राज्ञः सभां सुधर्मा सदृशीं प्रपेदे ।
तौ चापतुल्यापविलोकलोलौ सचापलौ कोसलराजपुत्रौ॥१०३

तत्र विधिवदभ्यर्चितः कथितदशरथतनयतत्त्वसारः कौशिक प्रमुखैरमरैरस्मत्कुले महत्तरे देवराते निक्षिप्तं विशेषतः सीता शुल्कार्थं मया रक्षितमिदमिति जनकेन प्रदर्शितस्य चापस्यारोपणे राममादिदेश ।

रामे बाहुबलं विहृत्यवति धनुर्वंशे गुणारोपणं
नाभूत्केवलमात्मना तिलकिते वंशेऽपि वै कर्तने ।
आकृष्टं नितरां तदेव न परं सीता मनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजान्दोस्तम्भदम्भस्य च ॥१०४॥

रामाकर्षभग्नकार्मुकभुग्नाध्वानेन रोदोरुधा
हंसच्चयशः सितच्छदकुले जीमूतनादायितम् ।
गौरस्त्रो प्रथमप्रवेशसमये पुण्याहघोषायितं
मैथिल्याः किल मानसे परिचये माङ्गल्य तूर्यायितम्॥१०५

रवः कठिनकार्मुकत्रुटित चापजन्माक्षणा-
द्दिशां द्विरदकीतृक्रतैः कृतहरित्पति स्वामतः ।

जगद्विस्मयकौतुकोच्चलितरामकीर्त्यङ्गना
प्रयाणपटहध्वनिं प्रथयतिस्म ताराध्वनिः ॥ १०६ ॥

तत्र सीता परिणयकृतनियमजनकप्रहितदूताहूतः पुरोहिताभ्युपगमान्मिथिलामुपागमद्दशरथः ।

यत्कीर्तिस्तिलकायते कुरवधू सङ्गीतगोष्ठीमुखे-
ष्वेनाद्यः पितृमान् पुमान् वसुमती येनैव राजन्वती ।
इन्द्रः सङ्कटसङ्कटेषु विजही वीरस्य यस्योन्मुख-
प्रेङ्खत् स्यन्दनकेतनाम्बरदशासंदर्शनाद् दुर्दशाम् ॥१०७

ततः जनकः स्वकनीयांसमाजुहाव कुशध्वजम् ।
हत्वा युधि सुधन्वानं साङ्काश्ये स्थापितं पुरे ॥ १०८ ॥

तदनु ताभ्यामभ्यर्थितः स पुरोहितो दशरथस्तत्र पुत्राणां गोदानमङ्गलं निर्वर्तयामास ।

जग्राह जनकात्सीतां तातादेशेन राघवः ।
आम्नाय शासनेनाग्निं यजमानादिवानलः ॥ १०९ ॥

आश्चर्यमेतत् ।

गुणमनिमिषं चापि कश्चिदारोप्य सीतां
कुशिकतनयवाक्यादग्रहीद्रामभद्रः ।
तदनु तदनुजन्मा मैथिलेन्द्रस्य चित्ते
निहितबहुगुणःसन्नूर्मिलां लक्ष्मणोऽपि ॥ ११० ॥

ततो भरतशत्रुघ्नौ कुशध्वजनियोगतः ।
माण्डवी श्रुतिकीर्तिभ्यामभूतां गृहमेधिनौ ॥ १११ ॥

अथ दशरथः स्वतनयैः सह कृतविवाहैर्विदेहेभ्यः प्रति निवर्तमानो दुर्निमित्तदूयमानान्तरङ्गः संवर्तसमयसमुज्जृ-म्भितहुतवहदुःसहरोषभीषणं दुर्वारपराक्रमं क्षत्रवर्गगर्व-

सर्वक्षत्रपरम्पराशोणितसरिद्धारापरिकल्पितपितृतर्पणं दर्पवतामग्रेसरं समुदग्रप्रतापं तपःसमुचितवल्कलमयवसनं वसानमपि वासवाशाखादन्तिपरिमुषितशुभ्रत्वं मध्येमार्गं भार्गवमुनिमतिक्लिष्टं रामभद्रमहावीरप्रमुखो नृपः । तद्विलोकनादेव प्रत्युत्थानोऽपि महर्षिभिः सह विधाय सपर्यामार्येण कुशलमन्वयुङ्क्त ।

अथ दशरथमार्गेणोन्ता महत्त्वम् प्रसन्नो
भृगुपतिरिदमूचे प्रस्थितं रामभद्रम् ।
अवजिगमिषु रामं जीर्णं चापास्तकीर्ति
रविदितपरशोस्ते दोर्मदं कार्मुकेऽस्मिन् ॥ ११२ ॥

आदाय तत्तनुगुणमाशु विधाय तत्र
सन्धाय बाणमवधार्य तपोधनत्वम् ।
तज्जीवितात्य इव मानमना मनीषी
सम्मूतघोरसमराद्विरराम रामः ॥ ११३ ॥

तावुभौ च भृगुवंशसम्भवौ चापदण्डजमदग्निसम्भवौ ।
प्रत्नभावमवलम्ब्य केवलं राघवार्पितगुणौ बभूवतुः ॥ ११४ ॥

युगपत्प्राप्तगुणयोश्चापभार्गवयोस्तयोः ।
ऋजुता वक्रतां प्राप वक्रतापि तथार्जवम् ॥ ११५ ॥

ततस्तत्क्षणममोघेन राघवः शरेण भार्गवस्य स्वर्गगतिं रुरोध । स्थाने हि तत् ।

नूनं जनेन पुरुषे महति प्रयुक्ता
मागः परत्र तदनुरूपफलं प्रसूते ।
कृत्वा रघूद्वहगतेः क्षणमन्तरायं
यद्भार्गवः परगतेर्विहतिं प्रपेदे ॥ ११६ ॥

अथ संक्रान्तया जामदग्न्यशक्त्या सम्पदा सम्पन्नस्वभाग-
परिहृतभोगभुजाभिराममविरलपुलकमालिङ्ग्य मूर्ध्न्युपाघ्राय
दशरथः परिखयेव परिसरस्थया सरयू सरितानुविद्धा-
मयोध्यां दारकान् सदारान् सादरमवलोकयन्तीनां पौर-
पुरन्ध्रीणां निरन्तरितगवाक्षैः कटाक्षैः सौन्दर्यं वञ्चिततापिच्छैः
पिच्छातपत्रायमाण धवलातपत्रः प्रविवेश।

तत्र। लज्जावशादविशदस्मरविक्रियाभि-
स्ताभिर्वधूभिरतिवेलमवाप्तसौख्यान्।
इक्ष्वाकुनाथतनयान् प्रथमो रसानां
तारुण्ययोगचतुरश्चतुरः सिषेवे॥ ११७॥

विद्ययेव त्रयी इष्ट्या दर्भपत्राग्रधीः सुधीः।
राजपुत्र्या तया रामः प्रपेदे प्रीतिमुत्तमाम्॥११८॥

इति श्रीविदर्भराजविरचिते चम्पूरामायणे बालकाण्डं
समाप्तम्।

---

अथ अयोध्याकाण्डं प्रारम्भः।

गच्छता दशरथेन निर्वृतिं भुभुजामसुलभां भुजाबलात्।
मातुलस्य नगरी युधाजितः स्थापितौ भरतलक्ष्मणानुजौ॥१॥

अथ दशरथः पुत्रं रामं स्वतस्त्रिजगत्पतिं
स्वविषयमहीमात्रे कर्तुं पतिं विदधे मतिम्।
भुवनभरणे कल्पं कल्पाणभूधरमादरात्
स्वगृहपटलीधुर्यस्तम्भं विधातुमना इव॥ २॥

तदनन्तरमसौ संमन्त्र्य मन्त्रिभिः सह पौरवृद्धान् वृद्ध-

अथ: पुरोधस: समान् पुरोहिताश्च समाहूय समादिदेश । विदितमेव हि भवतां शिवतातिमेव मतिं दधाना: सुपथा सुखचरमाणा: प्राणिनान्दयमानमानसा: मानधना: अयशः संसरणि संमार्जनजागरूका: जनोपतापमार्जनपरा: परां निर्वृतिमुपेत्य देवभूयङ्गता: सर्वे न: पूर्वपुरुषा इति । तस्मा-दस्माभिरप्येतेषां सरणिमनुसरमाणैरेतावन्तं कालं परि-पालिता: किल सकला: प्रजा: प्रमाणमत्र परिपालनक्रिया-मनुभवन्तो ननु भवन्त: । एवं भवतामभ्युपगतानां निगमानां वा प्रतीपगामिनीं पदवीं न प्रत्येति खलु लोकस्तदस्ति किञ्चिदभ्यर्थनीयम् ।

मम सुरनरगीतख्यातिभिर्हृतिभिर्वा
दिवि भुवि च समानप्रक्रमैर्विक्रमैर्वा ।
नियतमपरिहार्या या जरा सा मदङ्गे
विकचकमलखण्डे चन्द्रिके वा विरासीत् ॥ ३ ॥

तस्मात्समस्तक्षत्रवर्गगर्वपाटनपटुधारा परश्वधभरण-भीषणवेषभार्गवभङ्गादपरिच्छिन्नतरशौर्यशालिनि सौजन्य भाजने जनानुरागनिलये निर्मत्सरे मत्समेव वत्सेऽस्मिन् विश्वम्भरा भारं चिरकालधार्यमाणमार्यैरमात्यैरनुमत: सन्नवतार्य विश्रान्ति सुखमनुभवितुमभिलषामीति । तत: प्रावृषेण्यपयोवाह व्यूहस्तनितनादाकर्णन समुदीर्ण निरति शयाह्लादनिसर्गनिरर्गलनिर्गलत्केकालापिन: कलापिन इव जना: प्रमदभवक [illegible] कलरवमुखरित हरिन्मुखा बभूवु: ।

आनन्दवा[illegible]नसरी नयने प्रजाना-
माविव [illegible] [illegible]न्द इवारविन्दे ।

रामस्य कान्तिमभिषेकदिने भवित्रीं
प्रत्याख्य चक्षुरिव वीक्षितुमादरेण ॥ ४ ॥

राजापि तेषां सम्पत्स्यमान महोत्सवोत्सुकजनसंमर्द-जनिष्यमाणरजो राजिव्रातपरिजिहीर्षयेव रोमाञ्च प्रपञ्चेन कञ्चुकिताङ्गानां प्रमाणातीतां प्रीतिं प्रपन्नानां हर्षप्रकर्षेण द्विगुणीकृतमानन्दमन्तर्नियम्य सुमन्त्रप्रमुखान् मन्त्रिमुख्या-नेव माचख्यौ।

अस्मानना श्रित तपोवनभूमिभागान्-
उन्मुच्य मार्गपरिपालनजागरूकान्।
अज्ञानमौग्ध्यमचिरादवलम्ब्य राम-
मेवंविधः कथमुदेति जनानुरागः ॥ ५ ॥

तेऽपि नियमितनिजमनोरथाय दशरथाय सविनयमेवं व्यजिज्ञपन्।

देवे स्थितेऽपि तनयस्तव रामभद्रं
लोकः स्वयं भजतु नाम किमत्र चित्रम्।
चन्द्रं विना तदुपलम्भनहेतु भूतं
क्षीरोदमाश्रयति किं तृषितश्चकोरः ॥ ६ ॥

तदनन्तरं तत्वरे तत्वविदांवरस्य वसिष्ठस्य शासना-दभिषेकोपकरणाहरणाय सामात्यः पौरवर्गः।

आहूय रामं विनयाभिराममाविः प्रमोदप्रभुरेवमूचे।
तवोत्तमाङ्गे मुकुटं विधातुमङ्गाय तिष्ये दिवसे यतिष्ये ॥७॥

अथ दशरथमनोरथं कौसल्यायै निवेद्य स्वभवनमुप-गतस्य रामस्य भगवान् वसिष्ठः सञ्जातकौतुकः कौतुक-मङ्गलं निर्वर्तयामास।

आपूरयन् मङ्गलतूर्यघोषैराशावशा वल्लभकर्णतालान्।
उज्जृम्भितः कोऽपि गिराममूमिरुन्मस्तकः पौरजनातिमोदः॥८

तत्र। यामेवाशुनिशिचरकुलोन्मूलने मूलहेतुं
यस्याश्चित्तं प्रकृति कुटिलं गात्रमिवं बभूव।
अम्भोजिन्याः शिशिरचरितः कासरीवाच्छमम्भः
कैकेय्याः सा हृदयमदयं मन्थरा निर्ममन्थ॥ ९॥

अलघुचलितझञ्झावातनिष्पेषदोषा-
दशनिरिव कठोरः शीतलाम्भोदपंक्तौ।
अपहृतजनसौख्यान्मन्थराभेदवाक्या-
दपि भरतजनन्यां हन्त दौर्जन्यमासीत्॥ १०॥

सैषा मन्थराभिधानपिशाचिका वेशपरवशनिजाशया पूर्वं दण्डके वैजयन्त पुरवास्तव्यशम्बरासुरसङ्गरसङ्गतवेदनापनोदनवेतनार्थमात्मने वितीर्णवराय दशरथाय वरद्वयं न्यवेदयत्।

तयोरेकस्य संरम्भो भरतस्याभिषेचनम्।
अन्यस्य वन्यवस्त्रैश्च वने रामस्य वर्त्तनम्॥ ११॥

तस्मिन् क्षणे वरयुगं क्षणतप्ततास्त्र
नाराचवेधपरुषं श्रवसी विदार्य्य।
सत्यप्रहाणचकितस्य नृपस्य काम-
मूर्मी चकार हृदये पुटपाकरीतिम्॥ १२॥

तदनुतनयवार्त्तामात्र सन्तप्यमाना-
दथ दशरथचित्ताच्चेतना निर्जगाम।
दवहुतवहरोचिर्ज्वालया लिह्यमाना
झटिति गहनगुल्मादुज्जिहाना मृगीव॥ १३॥

अथ दशरथः कथमपि लब्धसंज्ञः कैकेयीमभाषत ।

रामः काममुपाश्रयिष्यति वनं त्वद्वाक्यतः कौतुकं
लोकस्त्यक्ष्यति कौतुकं चिरधृतं तस्याभिषेके कथम् ।
धर्मापायभयेन वत्सविरहं द्रक्ष्यामि वक्ष्यामि किं
यावत्कल्पमकीर्त्तिरात्तिजननी जायेत जायेतवा ॥ १४ ॥

वत्सं कठोरहृदये नयनाभिरामं
रामं विना न खलु तिष्ठति जीवितं मे ।
धातुर्बलादुपयमस्त्वयि जातपूर्वः ।
कैकेयि मामुपयमं नयतीति मन्ये ॥ १५ ॥

तदनु निजमनोरथैकपूरणे कृतादरा कैकेयी सोपहास-
मवादीत् ।

सत्यविप्लवमपत्यसङ्गतः सङ्गतं भुवमपश्यतस्तव ।
आश्रुतस्य विफलत्वमस्ति चेदाश्रुतस्य रचितोऽयमञ्जलिः ॥ १६ ॥

किं नागतस्ते श्रवसोः सकाशमरिन्दमः सत्यगिरां पुरोगः ।
श्येनाभिभूतकपोतपोतजीवातवे यस्त्वनिकृत्तगात्रः ॥ १७ ॥

किं च ।

अभ्यर्थ्य कश्चिदुपाश्रिताय वितीर्य विप्राय विलोचने स्वे ।
आपूरयत्कश्चिदलर्कसंज्ञः प्राज्ञः प्रतिज्ञां प्रथितप्रभावः ॥ १८ ॥

असुरसमरवेलाजातबाधावसाने
वरयुगमदिशस्त्वं प्रीतिपूर्वं यथा मे ।
अशिथिलगुणबन्धाः सत्यसन्धा नरेन्द्रा
जलधिपिरिति कामं संगिरं तां गिरं ताम् ॥ १९ ॥

किं बहुना ।

सत्यो वागिरमिह निर्वहस्वभावा-

सम्मानं भुवि न सहेय राममातुः ।
संस्थास्ये विषमुपभुज्य पश्यतस्ते
सत्याहं त्यजसि न चेत् प्रवर्त्तमानम् ॥ २० ॥

एवं वादिनीमिमां भूयोऽपि भूपतिरवदत् । अयि कठिन-हृदये किमलं मुक्तलोकमर्य्यादया दयापेतया त्वयेति ।

नैवाभवस्त्वमिह शीलवतीषु गण्या
नैवागमत्पितृमतां गणनां स रामः ।
नैवापमाजमसुखान्यहमपत्रनार्यै
नैवापमम्ब भरतेन न मे प्रदेयम् ॥ २१ ॥

किं च । वासस्त्वचां भवतु किञ्चन तारवीणां
छायाद्रुमाश्च भवनानि भवन्तु वन्याः ।
कैकेयि तस्य शयनानि कथं भवेयु-
स्त्वच्चेतसोऽपि कठिनानि शिलातलानि ॥ २२ ॥

एवं भर्त्रा भर्त्सिताप्यार्द्रचित्ता नाभूदेषा मन्थराक्रान्तवृत्तिः । राकाचन्द्रे राजमाने निशायां नीरच्छन्ना चन्द्रकान्तस्थलीव ॥ २३ ॥

तदनु मुहूर्त्तमात्रमपि राममुखावलोकनसुखमनुबुभूषु-र्दशरथः कुमारमानयेति सुमन्त्रमादिदेश । तेन सत्वरं राजभवनं प्रवेशितस्ततो रामः कृतप्रणामः पितरमयथा-भूतमुखविकासमाराद्दालक्ष्य चकितमतिः किमिदमिति कैके-यीमन्वयुङ्क्त । सापि पापाशया प्रत्यवादीत् । वत्स ! प्रति-श्रुतवरद्वयनिर्वहणे निपुणतरस्तातस्ते सम्प्रति सानुशय-स्तनयवात्सल्यात् सत्यच्युत्यासत्रासाच्च गाढमगाधशोक-सागरे निमज्जतीति । वरद्वयं तावत्तव वन्यवृत्त्यैव वने वर्त्तनं भवने रवनं भरतस्य चेति । रामस्तदाकर्ण्य प्रमुदित-

हृदय: कृताञ्जलिरेनां व्यजिज्ञपत् ।

भीतो भूभरत: किमम्ब भरत: किंवा वनात्पावनात्
वत्सोऽहं सगरान्वयाय ककुदस्तात: कुत: शोचति ।
दिश्याया: सरितो निवापकरणाल्लघ्वीं प्रतिज्ञामिमां
आवाभ्यामिह पूरयिष्यति न चेत् पुत्रो कथं स्यादयम् ॥२४॥

वनभुवि तनुमात्रत्राणमाज्ञापितं मे
सकलभुवनभार: स्थापितो वत्समूर्ध्नि ।
तदिह सुकरतायामावयोस्तर्कितायां
मयि पतति गरीयानम्ब ते पक्षपात: ॥ २५ ॥

किञ्च । तात: स्ववाचा व्यवहृत्य हृद्यं
वत्साभिषेकोत्सवमङ्गलं मे ।
प्रणामसंज्ञस्य मयार्पितस्य
किं पूर्णपात्रस्य न पात्रमासीत् ॥ २६ ॥

तत्क्षणमशनिहत इव पर्वत: सर्वत: परीतदवदहन इव वनस्पति: दिवस्पतिपदभ्रंशविधुर इव नहुष: पपात नि:संज्ञ: पङ्क्तिरथ: । तत: सा पितृनिदेशविचारमचिरमाचरेति राममादिदेश । स एष: ।

मातुराज्ञां वहन् मूर्ध्ना मालामिव महायशा: ।
वनाय रामो वव्राज जगतामवनाय च ॥ २७ ॥

असौ समासाद्य कौसल्यासदनमभिषेकप्रतिबन्धं कैकेयी निर्बन्धमात्मनश्च वनवासं प्रणामानन्तरं तस्यै न्यवेदयत् । एतदाकर्ण्य विदीर्णहृदया विषदिग्धमुखशिलीमुखविद्धश्रवणयुगलेव सहसा भूम्यां निपत्य विललाप ।

रेखारथाङ्गसरसीरुहशङ्खचिह्ने

क्षेमङ्करे तव करे जगतां त्रयाणाम् ।
कान्तारकन्दखननं रचयेति नून-
माबद्धवान् प्रतिसरं भगवान् वसिष्ठः ॥ २८ ॥

तत्र सौमित्रिरतिमात्रप्रवृद्धमन्युः शतमन्युसमानमेनमग्रजमकथयत् । आर्य्य ! न कार्य्यमिदं लोकगर्हणीयायाः कैकेय्या वचसा जरसा च समाक्रान्तस्वान्ततया कृत्याकृत्यविवेकमूकस्य राज्ञः प्रश्रयशिथिलग्राचिःसृतेन वचसा सन्त्यज्य राज्यमटवीपर्य्यटनं विधातुम् । किन्तु तुभ्यमनभ्यर्थ्यमानाय प्रथममेव पित्रा प्रदत्ता ननु पृथ्वी । क्षत्रधर्मोऽपि सत्यात् पथः प्रमाद्योऽपि वर्णाश्रमरक्षणतः समीचीनः प्रायेण पुरुषं निश्रेयसे नियोजयेत् । नियतं नियतेर्बलमतिलङ्घ्य पौरुषमेव पुरुषस्य धीरस्य पुरुषार्थान् समर्पयेत् ।

मा भूत्त्वत्पदपद्मयोररुणिमा कान्तारसञ्चारतः
पाणौ पाटलिमा मनाक् प्रसरतु ज्याकर्षणादेव मे ।
कैकेयीपरिभूततातवचने नम्रो भवान्मास्म भूत्
किंवा मामकमार्य्यशौर्य्यजलधे नम्रं धनुर्वर्त्तताम् ॥२९॥

एवमाचक्षाणं लक्ष्मणं रामः सान्त्वयन्नेवावोचत् । वत्स ! सवितृवंशजातानां पितृनिदेश एव देशिकः सर्वकर्मसु । बहवः खलु पितृवचनगौरवात् गोहत्यामपि मातृवधमपि तारुण्यविनिमयमपि सकुण्डरैणुकेयपूरुप्रभृतयः कुर्व्वाणास्तेऽपि निर्विचारमाचारवतामग्रगण्या इति गण्यन्ते । तस्मादवश्यं वश्य एव पितुरवगाहे गहनमिति । तत्र विस्तृतपत्रवात्सल्या कौसल्या तेन सह गन्तुमभिलषन्ती

कृतप्रणामेन रामेण सविनयमेवमभिहिता।

कान्तारभाजि मयि केकयराजपुत्र्याः
कार्कश्यकन्दलितया दलितस्य वाचा।
तातस्य शोकदहनम्लपितं शरीरं
मातस्त्वया ननु कदाचिदुपेक्षणीयम्॥ २०॥

ततः सा तनयस्य स्वस्त्ययनाय समस्तदेवताकीर्तन-
पुरःसरीमाशिषमाचचक्षे। रामस्तामभिवन्द्य निष्क्रान्तः
प्रक्रान्तनेपथ्यायाः सीतायाः प्रासादमाससाद।

कल्याणवादसुखितां सहसैव कान्तां
कान्तारचारकथया कलुषीचकार।
अम्भोदनादमुदितां विपिने मयूरीं
सन्त्रासयन्निव धनुर्ध्वनिना पुलिन्दः॥ २१॥

अथैनामुपगन्तुमुपक्रान्तामकथयत्।

प्रिये जनकनन्दिनि! प्रकृतिपेशलामीदृशीं
कथं ग्लपयितुं सहे तव शिरीषमृद्वीं तनूम्।
गृहीत हरिणीगणत्विकविसारि नानाशिरा-
श्चतिस्फुरितशोणिताक्तणवकानने कानने॥ २२॥

तदनु नानाविधप्रयत्नशतेनाप्यनुन्मिषदनुजिगमिषा-
शेषिल्यायां मैथिल्यां लक्ष्मणेऽप्यनवसितानुगमनव्यवसाये
वासिष्ठाय सुयज्ञाय भूषणमशेषं नागसहस्रेण सह शत्रुञ्ज-
याह्वयमतुलं मातुलदत्तं हस्तिनमगस्त्यकौशिकाभ्यां च
महार्हाणि च रत्नानि वितीर्य निर्जरारातिवीर्यमुषी धनुषी
निरपाय त्राणकर्म्मणी वर्म्मणी निर्म्मर्यादशिलीमुखक्षताशु-
षङ्गौ निषङ्गौ निर्वर्तितवीरपाणी कृपाणी वरुणेन जनकस-

इति इत्तमेतत्सर्वमादाय मामनुगच्छेति सौमित्रिमन्वग्रहीत्। सीतापि निजाभरणगणमुपयम्पत्न्यै विदधे। सौमित्रिरपि स्वधनेन कश्चित्कौसल्याश्रितमुपाध्यायमतोषयत्। तत्र सकुटुम्बाय त्रिजटाभिधाय द्विजातये स्वहस्ततलनिक्षिप्तदण्डदेशावधिकं गोधनं काम्पिल्यादिभ्यो द्विजातिभ्यश्च रघुपतिर्वित्तानि विविधानि विततार। ततस्ते पौरनारीणां विश्वासान्निःश्वासजृम्भानिलचलदधरकिसलयानामश्रुसलिलासारेण शोकपावकेन च वपूंषि मनांसि च सिक्त्वा दग्ध्वा च निषिद्धपरिजनानुगमनतया प्रकाशितप्रवाससिद्धान्तात्कुद्धान्तान्निश्चक्रमुः। तत्र।

सीता पुरा गगनचारिभिरप्यदृष्टा-
मा भूदियं सकलमानवनेत्रपात्रम्।
इत्याकलय्य नियतं पिदधे विधाता
बाष्पोदकेन नयनानि शरीरभाजाम्॥ ३३॥

कष्टापि यान्तमनुगच्छति मैथिली मां
वत्सो जहाति न कदाचन लक्ष्मणोऽपि।
इत्येतयोरनुगतिं प्रतिबोध्य गन्तुं
भूयोऽपि राजभवनं प्रविवेश रामः॥ ३४॥

तस्मिन् सुमन्त्रेण विज्ञाप्य दर्शिते दाशरथौ भूपतिर्भूताविष्ट इव विष्टरान्निपत्य सदारः सदारचितपरिदेवनोत्कण्ठा स्वयमपाकरोत्। तदा सुमन्त्रः कैकेयीमब्रवीत्। देवि! विरम विरम रामाभिषेकसमुच्छ्रिताह्लादाङ्कुरावग्रहाद्याग्रहात्। पुरा खलु ब्रह्मणो वरप्रसादादवगतसकलप्राणिभाषणतया पर्य्यङ्कपर्य्यन्तपरिसरत्पिपीलिका-

तापि कृतहासं तव पितरं हसनकारणं पृष्ट्वा तद्विवरणं प्रत्युमरणहेतुरित्येवेत्यापि भूयसो निर्बन्धात् कुपितेन राज्ञावज्ञाताया: मातुस्ते मार्गं मा कुर्वीथा इति । ततः ।

कृतासमञ्जनिर्यासं सगरं केकयात्मजा ।
निदर्शनेन निर्दिश्य निरबध्नान्निजं पतिम् ॥ ३५॥

तत्र ।

सिद्धार्थको महामात्यस्तत्परित्यागमब्रवीत् ।
सरयूपतितानेकप्रजामरणकारणात् ॥ ३६ ॥

अथ दशरथेन रामः सपरिच्छद एव गच्छेति निर्दिष्टः केवलं खनित्रपिटके वल्कलयुगलं च प्रार्थयत् ।

सुखोचितानां सुव्यक्तदिव्यलावण्यसम्पदाम् ।
त्रयाणामपि कैकेयी वल्कलादीन्युपाहरत् ॥ ३७ ॥

अथ रघुकुलनाथो मध्यमाम्बानियोगा-
दुपवति परिधाने मङ्गलार्हे निराशः ।
अधिकुचतटबद्धाज्जानकी बाष्पसेका-
दुपगतखरभावं वल्कलं पर्य्यधत्त ॥ ३८ ॥

तत्र ये चित्रोयन्त: सर्वे निर्विकारवदनलक्ष्मीक-मिक्ष्वाकुलाध्यक्षमध्यवयस्तेषामेव शोकशङ्कुसङ्कीलित-मानसानामाननेषु पारम्पर्येणास्फुरद्विकारः ।

सवल्कले दाशरथौ विषादात्संमीलिताक्षो यदभूद्वशिष्ठः ।
तदेव जातं करणं महर्षेः काकुत्स्थयाथार्थ्यविलोकनस्य ॥ ३९॥

अस्य पीताम्बरत्यागे किं जाता विक्रिया पुरा ।
इति प्रत्यक्षदृश्यां श्रेष्ठो वशिष्ठो नातिविव्यथे ॥ ४०॥

सोऽयं मैथिलीवल्कलधारणमकरुणदारुणसारग्रिन्ध-

गुरु:। तत्र। प्रयाणाय प्रणिपतन्तीं स्नुषामाश्लिष्य कौशल्या गद्गदमवदत्।

धर्मं निदाघकिरणस्य करै: कठोरै:
कान्तारमध्यपदवीषु नखम्पचासु।
त्वां वीक्ष्य निस्तुलपदां वनदेवताभि-
र्निन्दिष्यते नियतमेव निमेषहानि:॥ ४१॥

अथ मैथिलीनाथ: सलक्ष्मण: समर्दाशिषं राजानं जननीजनञ्च प्रणम्य प्रतिविहप्रतिहारचक्रो निश्चक्राम। रथो दशरथाज्ञापरतन्त्रेण सुमन्त्रेण द्वारि समानीत:।
प्रारब्धयात्रस्य रघूद्वहस्य प्रागेव सीता रथमारुरोह।
आनीलरथ्यं रथमारुरुक्षोरङ्कां प्रभोरग्रसरी प्रभेव॥ ४२॥
दाशरथी च रथमारुरुहतु:।
यथा यथा राघवराजधानीं विहाय सीता विपिनोन्मुखाऽभूत्।
तथा तथा जायत यातुकामा लङ्कां विना राक्षसराजलक्ष्मी: ४३

आबालवृद्धमनुगच्छति रामभद्र-
मेषा पुरी तदिह मा खलु निर्गुणा स्यात्।
इत्यादरादिव धरा बहुधा विधाय
धूलिच्छलादिजतनुं तमनुप्रतस्थे॥ ४४॥
नृपसुखविमुखेन स्वेन कान्तेन सार्धं
दुहितरि विधिपाकात् काननाय व्रजन्त्याम्।
अकुशलमिति मत्वा नूनमङ्काय धात्री-
परिजनसुखवाप्यं पांशुभि: पर्यहार्षीत्॥ ४५॥
रामानुसारसह निर्गतपौरवर्गा
संस्थानमात्र गृहचत्वरराजमार्गा।

निर्मुक्तभोगभुजगत्वगिव क्षणेन
लघ्वीबभूव रघुपुङ्गवराजधानी ॥ ४६ ॥

अथ दशरथः सान्तःपुरजनः पुरान्निर्गत्य गत्यन्तराभावात्तमेव रामं सुचिरमवलोकयन्नालोकपथमतिक्रान्ते सुमन्त्राक्रान्तस्यन्दने रघुनन्दने स्यन्दमानबाष्पप्रवाहो मोहमुपगम्य भूम्यां पपात। ततः परिजनकृताश्वासाल्लब्धसंज्ञाय राज्ञे कौशल्यासदनमरोचत। दाशरथिरप्यहमहमिकया संमूर्छन्महाजनौघदुरवगाहतया मन्दायमानस्यन्दनवेगः सकलजनविवेककोकनदं मुकुलयन् मोहतमसा तमसातटमुपागमत् चरमगिरिशिखरमपि सहस्रदीधितिः।

आविःप्रलापमटवीं भजतो जनस्य
काकुत्स्थपादविरहासहमानसस्य।
आस्तीर्णपर्णशयनान्यभवन् गृहाणि
मूलस्थलानि तमसातटभूरुहाणाम् ॥ ४७ ॥

अथ निशीथे दाशरथिः सुमन्त्रेण संमन्त्र्य वञ्चितजनसंहतिरतिविनतानन्दनेन स्यन्दनेन वेदश्रुतिगोमतिनिष्यन्दिनी नाम नदी तत्र च परिष्कृतामिक्ष्वाकवे मनुना दत्तां वसुमतीमतीत्य विविधवनगहनवीरुत्तृणपटलपिहितरथतुरगखुरमुद्रया पदव्या गङ्गातरङ्गसङ्गतमूलं गगनगङ्गालिङ्गितशृङ्गशृङ्गवेरपुरालङ्कारमिङ्गुदीपादपमुपागमत्। तत्र।

दृष्ट्वा राममनेकजन्मरचितैर्दृश्यं शुभैः कर्मभिः
श्रुत्वा मातृवरद्वयादुपगतां वृत्तिञ्च वैखानसीम्।
उत्पत्युत्थितहर्षशोकजनितैर्बाष्पैर्निषाधाधिपः

शीताशीतगुणान्वितैरविरलैः संप्लावकोऽभवत् ॥ ४८ ॥

सोऽयं सुहृत्तमासाद्य गुहः कृताञ्जलिरञ्जसा रघुनाथमनुनाथितवान् । देव ! पितृनियोगप्रवणान्तःकरणमपि भवन्तं विज्ञापयितुमज्ञातजानपदरीतिभारती मां मुखरयति । अस्ये तदनिवार्य्यवीर्य्योद्भटभटवर्गदुर्गगुप्तमनुपक्रमोज्यजातमन्थरं मन्थराहृदयतोदावहमस्मदीयं राज्यम । तदिदमनिशं प्रथमप्रवृत्तं परिगृह्य किञ्चिदनुगृह्य परिजनयोग्यभाजनममुञ्जनमसुञ्चन्नेव तातादेशेन देशेऽस्मिन् विस्मयनीयानुभावमुनिवृन्दमन्दाकिनीसन्दर्शनेन मन्दायमानजननीजनदुर्दशश्चतुर्दश दशरथकथिताः समाः समापयतु भवानिति ।

तस्मिन्नित्थं प्रार्थनाभाजि सख्यौ
प्रत्याचख्यौ रामभद्रः प्रियोक्त्या ।
मातुर्व्वाक्याद्दत्तकालेनाहृतं मे
गात्रं स्वात्मप्रक्रियां नार्हतीति ॥ ४९ ॥

ततस्तु तदनुरोधेन रोधस्तरोरधस्तात् सुमन्त्रनियन्त्रितरथ्ययोर्दाशरथ्योरातिथ्यं समधुपर्कं कर्तुमिव मन्दमन्दमरविन्दवृन्दस्यन्दमानमकरन्दविन्दुसन्दोहवाहिनि वाहिनीतरङ्गमरुति वातिकाननगमनावस्थां काकुत्स्थस्य प्रेक्षितुमक्षमायामिव क्षमाभृति चरमे तिरोहितायामह्नामधिदेवतायां सन्ध्याम्बरमां रामः समाप्य तस्यां तरुमूलभुवि लक्ष्मणकल्पितं पर्णतल्पमभजत ।

रामे विदेहसुतया तरुमूलसंश्र-
मन्तःपुरं विशति लक्ष्मणसौविदल्लम्

निध्याय तं नियमिताभितबाष्पवृष्टि-
र्निद्रां निरस्य निषसाद निषादनाथः ॥ ५० ॥

व्यतीतायां विभावर्यामर्यममरीचिवीचिमालाहारिणि पूर्व्वोर्व्वीधरमूर्ध्नि विरचितजटाबन्धौ सह सीतया दाशरथी भागीरथीकच्छमागच्छताम्। तत्र रामः प्रहृष्टचेताः सीतामाचष्ट।

मैध्याश्वमार्गपरिमार्गणदुर्नयस्य
दिग्धोर्ध्वर्षि कपिलकोपमहाज्वरस्य।
तातानुतर्पणपचेलिमभागधेयां
भागीरथीं भगवतीं शरणं भजामः ॥ ५१ ॥

तदनन्तरं रामः सान्त्ववचननिवारितसुमन्त्रः ससौमित्रिर्मङ्गलानि प्रार्थयमानया तया मैथिल्या सह गुहेनानीतां नावमारोह। स एव निषिद्ध निषादाधिपतेरनुगमनमपि तूर्णमेवावतीर्य सुरसरित्पुरः सम्पूर्णसस्ये मत्स्याभिधाने जनपदे कृतपदस्खलनच्छेदवेधनचतुर यतुरो मृगान् निहत्य कुत्रचिद्वनस्पतिमूले निशामनैषीत्। अन्येद्युरवन्येन पथा प्रयातास्ते प्रभाते प्रतीयमानहोमधूमप्राग्द्वारं भारद्वाजाश्रममाश्रयन्तत्राभिवन्द्यतम मन्दहर्षं महर्षिजनेनादिष्टवर्त्मना वैकर्तनी पूरोपप्लवं प्लवेन वैणवेन निस्तीर्य श्रमधनजनसन्निधानशमितश्वापदवसत्वचारित्वं विचित्रं चित्रकूटमचलमभजन्त।

अनुजरचितपर्णागारहृद्यासुमाद्यत्-
परभृतकुलचञ्चत्पञ्चमैरञ्चितासु।

जनकदुहितृयोगाज्जातसाकेतसौख्य-
स्थिर मरमत राम श्चित्रकूटस्थलीषु ॥ ५२ ॥

अथ मां वनवासवैरस्यादपि रामः समाह्वयेदिति प्रत्याशयोऽपरतन्त्रः सुमन्त्रः कानिचिदहानि गुहसकाशे नीत्वा निराशस्ततः प्रतिनिवृत्तो निवृत्तोत्सवामयोध्यामासाद्य निर्दाशरथिः सारथिरिति शोकातिरेकात् पौरजनजनितदीना क्रन्दमन्दीभूतनेमीघोषादवरुह्य रथाद्दशरथं प्रयाणोन्मुखप्राणं प्राणंसीत्। एतद्दर्शनेन विसंज्ञो दशरथः कौसल्यासुमित्राभ्यां समाश्वासितः कथं प्रयातं रामेण कथं कथितं मैथिल्या किं वृतः सौमित्रिरिति मुहुर्मुहुरश्रुकुण्ठितकण्ठः सुमन्त्रमन्वयुङ्क्त। सोऽपि राज्ञे व्यजिज्ञपत्। देव! कथं ब्रवीमि कठिनहृदयोऽहम्।

सेवारसानुगतपौरमनोरथस्य
पारे रथस्य च सुतौ तव वर्तमानौ।
भूत्वा विदेहदुहितुर्नवसौविदल्लौ
भागीरथीतटवने पथिकावभूताम् ॥ ५३ ॥

किन्तु। देव! त्वत्तनयस्य कुन्तलभरं क्षीरैः स्वधेनूद्भवैः
सेक्तुं नालमरुन्धतीपतिरभूत्तस्याभिषेकोत्सवे।
सिक्तोऽहन्त स एष मैथिलसुतावाष्पोदकोत्पादकै-
र्न्यग्रोधक्षरितैर्जटां रचयितुं क्षीरैर्निषादाहृतैः ॥ ५४ ॥

तस्या विदेहदुहितुः पदयोर्नखेषु
लाक्षां विनापरुणिमा सहसा बभूव।
वन्ये पथि प्रियतमेन सह व्रजन्त्या
वैवर्ण्यमाविरभवन्न कदापि वक्त्रे ॥ ५५ ॥

सीतापतेः किसलयैः परिकल्प्य तल्पं
सञ्चार्य्य सत्वरमनाय निशासु दृष्टिम्।
धन्यो तदङ्घ्रिभजनादिव पुण्यलभ्या-
दस्वप्न एव वनवर्त्मनि लक्ष्मणोऽभूत्॥ ५६॥

एवं सुमन्त्रनिवेदित पुत्रचरित्रचरमगिरिशिखरजुषि शिशिरवपुषि ज्योतिषि हृदयलग्नशोकशल्यां कौसल्या-माश्वास्य नरपतिरित्थमकथयत्। पुरा खलु सरयूरोधसि विविधतरुनिवहपिहितविवस्वति वेतस्वति मृगयास्पृहया कमपि समयमगमम्। तत्र।

तोयादाननिदानपुष्करगजभ्रान्त्या तपस्वी मया
विद्धः कश्चन शब्दवेधनविदा पाथःसरव्याहरन्।
तत्पित्रो र्जरदन्धयोरनुमतिं कर्तुं चितां चिन्वतोः
शापो मय्यपतद्भवानपि सुतप्रेम्णा प्रणश्येदिति॥५७॥

अहं वैश्यस्य शूद्रायां जातस्तस्मान्न संभवेत्।
ब्रह्महत्येति मामुक्त्वा स्वर्गतो दुर्गतो मुनिः॥ ५८॥

तदवश्यं वश्यएवास्मि मृत्योरिति नरपतिः स्मृतिमार्ग-गत राम एव विरराम।

मुनिशापकृतोत्पत्तिविपत्तिर्निष्प्रतिक्रिया।
यतो दशरथायाशु दिदेश दशमीं दशाम्॥ ५९॥

किं बहुना।

नाक्रान्तं त्रिदिवं परैः सुमनसां कान्ता न बन्दीकृता
नाकीर्णं पुरुहूतशासनधरैः साकेत वाह्याङ्गणम्।
नादिष्टां सचिवाश्च भूतलपरित्राणाय यद्यप्यसौ-
नाकं शोकवशादगाद्दशरथो नास्थां वहन् वाहने॥ ६०॥

अथ दशरथप्रशंसामांसलैः कैकेयीनिन्दाकन्दलितैः रामगुणकीर्त्तनद्विगुणितैरवरोधवधूजनपरिदेवनारवैर्मुखरितेषु दिङ्मुखेषु।

अभूद्राजकस्नानसलिलं गगनाङ्गणम्।
आलोक्येव तथा शान्तमशेषञ्च महीतलम्॥ ६१॥

ततः प्रभाते वसिष्ठवचसा तैलद्रोण्यां नरपतिं निक्षिप्य क्षिप्रमेव भरतमकथितदशरथकथमेव आनयतेति दूतान् कैकयेषु प्रेषयामासुः। तेऽपि जितपवनजवनहयसङ्कोचितपथास्तुरगपतिपुरे दुःस्वप्नदर्शनदूयमानमानसं भरतमभिवन्द्य गुरुनिदेशं व्यजिज्ञपन्। सोऽयं मातामहेन युधाजिता चानुज्ञातः कतिपयैरेव दिनैरतिनिमित्तसम्भूतसान्तकः साकेतमाससाद।

अतिचकितमतिः पुरेव पश्यन् पुरमयथा पुरचारपौरवर्गम्।
न्यविशत भरतः परीतदूतः पितृभवने पितृकाननादनूने॥ ६२

स पितरमनवेक्ष्य तत्र मातुः
सदनगतः प्रणिपत्य तामपृच्छत्।
क्व नु मम गतवान् पितेति सैषा
परुषतरं भरताय वाचमूचे॥ ६३॥

वनचर इव साकं मैथिली लक्ष्मणाभ्यां
पितृविधिमभिरोद्धुं प्रस्थितो रामभद्रः।
तदनु तव पिताभूत्कालधर्म्मानुकूल-
स्त्वमनुभव यथेच्छं निःसपत्नां धरित्रीम्॥ ६४॥

मयूरीव महानागं केकया केकयात्मजा।
भारत्या भरतं चक्रे परिक्षुभितमानसम्॥ ६५॥

तदनु भरतश्चिरतरं विलप्य विलुप्यमानविवेकः कैकेयीमकथयत् ।

परिणतिपरुषाणां पाप्मनां सन्निपातान्
न हि भवसि चतुर्णां सा त्व मस्माकमम्बा ।
तदिह तनयवत्यः संलपिष्यन्ति कामं
श्रुतिपुटरचितार्तं त्वां सविक्रोमकीर्तिः ॥ ६६ ॥

तदनु तन्मुखादाकृष्ट दृष्टिरनुजमिदमवादीत् ।

अविकलमिनवंशं दग्ध्रुमाश्रित्य तापं
जनमनसि चिरन्त्यां हन्तवत्यां भवत्याम् ।
अनुसवनमपापैर्दैवता पूज्यमाना
वहति कथमिदानीमाश्रयाशाभिधानम् ॥ ६७ ॥
अविरतरुचितार्तं वत्समालोक्य धेनो-
रपि तनुजयतामां मातुरस्रं बभूव ।
तदिह तनयशोकं सन्तरेदेकपुत्रा
कथय कथमिदानीं कोशलेन्द्रस्य पुत्री ॥ ६८ ॥
अपि वद्रियममन्धे कालयोगान्नरेन्द्रे
वरयुगरसनाभ्यां प्राणवायुं तदीयम् ।
अपनगरमनुष्यावर्त्तनं युष्मरूपं
पितृवनवसुमत्यां क्वापि वल्मीकवत्याम् ॥ ६९ ॥
एषा निकृष्टमतिरात्मगुणोचितेषु
वंशेषु सत्सु बहुधा पिशिताशनानाम् ।
माकन्दशालिनि वने विषवल्लरीव
हा हन्त ! केकयकुले कथमाविरासीत् ॥ ७० ॥

जननीति विहीना मे जननीति सधर्म्मवित् ।

निरयान्निरयाद्वीरो निरयादिव सानुजः ॥ ७१ ॥

ततः सामात्यः पत्युश्चितारोहणमभिलषन्तीं कौशल्यां भरतः प्रणयप्रणतैर्निवार्य्य वशिष्ठाधिष्ठितेन पथा दशरथाध्यायजूकाभिप्रेतं प्रेतकृत्यमशेषमकरोत्।

ताते पितृवनं याते यातुं भ्रातृवनं तथा।
भरतः प्रार्थयामास प्राञ्जलिः प्रकृतीः कृती ॥ ७२ ॥

ताभ्यां सुमित्रा कौशल्याभ्यामन्तःपुरजनेन च सह भरतो भवनमभजत। अथ यथाविधिविहितौर्ध्वदैहिकं गमित चतुर्दशदिवसं दिवसकरकुलहितकरैर्नगरवृद्धैः सार्द्धममात्याः समुपेत्य मुकुटाभरणाय भरतं प्रार्थयामासुः। तत स्तान् निर्बध्नतः सोऽयं प्रत्यवादीत्।

बहुभिरिह किमुक्तैस्त्यक्तसौमित्रिवृत्ति-
मुकुटमथ वहेयं युष्मदाज्ञाहि पूज्या।
मम परमवकाशः पर्णशालानुकूलः
क्वचिदपि विपुलायां नास्ति चेद्दण्डकायाम् ॥ ७३ ॥

इत्युक्त्वा रामसेवोत्सुकमना निश्चक्राम।

अनवधि रचयित्वा सत्पथे पांशुलत्वं
भुवनत्रयसौख्यप्रातिकूल्यञ्च कृत्वा।
नरपति गृहमध्यात्तूर्णमुद्घूर्णमाना
कुटिलगतिरुदस्थान् मन्थरा नाम वात्या ॥ ७४ ॥

ततः केशहस्तं स्वहस्तेन गृहीत्वा तद्वधोद्यतम्।
कौशल्या वारयामास क्रुद्धं रामानुजानुजम् ॥ ७५ ॥

ततः सान्तःपुरएव पुरान्निर्गत्य शिल्पिवर्गसमीकृत-सरणिर्भरतः पुरतः प्रसृतनरगजरथतुरगचरणक्षुण्णक्षोणी-

तत्समुत्कीर्णेन रेणुनिकुरम्बेण जम्बालयन्नम्बरं गङ्गां गङ्गाञ्च सुमन्त्रभणितगुणनिवह गुहानुमत्या निस्तीर्य्य दूरादेवाश्रमद्वारिनिवेशितबलभारो भरद्वाजाभिवन्दनमकरोत् । सोऽयं प्रीतमना मुनिर्भरतं तज्जनभोजनमपि प्रत्येकमालोक्य सेनामप्याहूय यथोचितमातिथ्यमकुरुत ।

तथातिथ्यं चक्रे भरतबलभाजां तनुभृतां
भरद्वाजः सोऽयं भ्रुकुटिभटकल्पाखिलसुरः ।
तपस्तप्त्वा घोरं दिवि सुमनसस्तत्फलभुजो
यथा तेषां तोषं क्षणमभिलषेयुर्मुनिकृतम् ॥ ७५ ॥

इति दिनं दिनशतकल्पं तत्र नीत्वा मुनेर्निर्देशेन सर्वेऽपि चित्रकूटवनोद्देशमविशन् । तत्र सन्यस्तसैन्यस्तत इतो गुहेन सह राममन्विष्यन् हव्य गन्धिना गन्धवहेन होमधूमेन च दूरादेवविभाव्यमानमचपल मृगगण मदृश्यरूपाभिर्वनदेवताभिरवकीर्य्यमाण बलिकुसुममशेषितपिशिताशन पिशाचोच्चाटनमन्त्रायमाण लक्ष्मण चापघोषश्रवण समुचित सामीप्य प्रदेशं नूतन परिकल्पित पर्णशालावास्तव्य वैखानसकुटुम्बिनी निर्विडित भूभागमनोकहशाखावलम्बमानवल्कलाजिनममुं तरुशाखा रचितैरम्बरचरपति सेनागण करकिसलयविमुक्तैरभि नवपल्लव भङ्गशबलैः कुसुमनिकरैरभ्यर्च्यमान जानकी निवास तरुमूल वेदिकामालक्ष्यमाण खड्गकार्म्मुक निषङ्गमतिथिजन सपर्य्यापर्य्युत्सुक सौमित्रि समाहृत कन्दमूल फलकल्पितैकदेशम विनाभूत जनकदुहितृ चरण नलिनविन्यासमपहसित साकेतरामणीयकं रामाश्रमं भरतः ससम्भ्रममभजत ।

अथावासं प्राप्ते रुक्षतसुकृतानामसुलभं
नवाम्भोदश्यामं नलिननयनं वल्कलधरम्।
जटाजूटापीडं भुजगपतिभोगोपमभुजं
ददर्श श्रीमन्तं विपिनभुवि सीतासहचरम्॥ ७७॥
ततस्तस्योपान्ते जनकयजनाधीन जननीं
ववन्दे वैदेहीं रजनिकररेखामिव नवाम्।
अरण्यानां पुण्यात्पदकमलमुद्रापरिचयात्
अयोध्यासध्रीचोमविकलमवस्थां विदधतीम्॥७८॥
स्वतः सिद्धं यस्मिन्नितरदुरवापं विजयते
सुमित्रापुत्रत्वादपि जगति रामानुजपदम्।
यदीयाचिह्नन्द्व प्रतिनिधि भवेदम्बुजयुगं
निशीथे निर्निद्रं यदि तमपि सा चादृत सः॥७९॥

तदनन्तरमम्बरपथे प्रथिततरश्रोभाभाजा देवात्कृतोपक्रमश्रमभ्रो वहतटाकं सुधाधारा पूरितापं भूरितापः सहसा इव कृष्णासारः सरभसमुपेत्य निपत्य पादयोश्चिरतरं रुदन् दशरथककथामपि कथित्वा मैथिलीसहिताय सलक्ष्मणाय रामाय शोकमूर्च्छां प्रायच्छत्। जननीजनोऽपि तत्र निपत्य सुचिरमरोदीत्।

विलोलक्ष्मनमेतेषां शोकोदन्वति तन्वति।
अगस्त्यायितमेतस्मिन् वसिष्ठेनात्मवेदिना॥ ८०॥

ततः प्रपद्य संग्राममनुज्ञया गुरोरमरसरिति विरचितसमुचितनिवापकृत्यं प्रणिपत्य राममसकृत् प्रवर्त्तयितुं भरतः प्रार्थयत्। विकर्त्तनकुलस्य यदनुकूलं गुणगणस्य यदनुगुणं यशोरूपस्य यदनुरूपं समाचारस्य यत्समुचितं प्राचीनं

भाग्यस्य यथोग्यं लोकगर्हणीयाय यदनर्हं सुतस्य वा बन्ध इयन्ताद्दशमाशय प्रकाशयन्ती भरतोपज्ञा विज्ञापना। तत्क्षणं क्षणप्रभा भङ्गुरलक्ष्मी समावेश लक्ष्मणि क्षोणीपति-सतश्रुतोज्झिते मुकुटे विघटिताशं रामं प्रणिपत्य सादरं मां पादुकाभ्यां परिष्कुरुत युवाभिति रघुवरचरणद्वयं स्वयमेव प्रार्थ्य परिरचयितुं स्थण्डिल शायिचरितमिव बभार भरतस्योत्तमाङ्गम् ।

तथाहि ।

त्वया मया च कर्तव्यं सत्यवाचः पितुर्वचः ।
इति प्रत्यादिशद्रामो भारतीमपि भारतीम् ॥ ८० ॥
जाबालि प्रार्थनायामपि व्यर्थायाम् ।
भरतस्तदनुप्रार्थ्य लेभे लाभविदां वरः ।
काकुत्स्थ पादुकाकारं महर्घं मुकुटद्वयम् ॥ ८१ ॥
स एष सानुजः प्रायादयोध्यां भ्रातृशासनात् ।
अटवीं पितृसन्देशाद्ययौ रामः सलक्ष्मणः ॥ ८२ ॥
विलङ्घ्य विविधान्देशान् भरतो धृतवल्कलः ।
विषयं समुपाश्रित्य विषये विमुखोऽभवत् ॥ ८३ ॥

ततश्चायं यावदार्यस्य प्रत्यागमनं तावदयोध्यां नाध्यास्ते। तस्मिन्नवधि मतिक्रम्य चिरायति सद्य एवाश्रया शमाश्रित्य प्राणानपि निरन्त्स्यामीति नन्दिग्राम संज्ञमाश्रम मध्यश्र-यत् । दाशरथिरपि शमधनजनकथित निशिचरगण-रचितकदनपरिहरणाय गहनजठरमवजगाहे ।

विस्तीर्णास्तैर्विपिन हरिणैर्वीत भीति प्ररोहै-
र्दर्भग्रासेऽप्यकृतरुचिभिः सस्पृहं वीक्ष्यमाणः ।

रामः प्रापत्र प्रकृतिमहितं स्थानमत्रेर्महर्षे-
र्जग्राहास्य प्रमुदितधियः प्रेमपर्यां सपर्याम् ॥ ८४ ॥

सीतामप्यनसूयाभिधाना अस्य पत्नी स्वभूषणै रतोषयत् ।
खण्डनाय वसुधावधूमनः पुण्डरीक तुहिनत्विषां द्विषाम् ।
दण्डकावन मवाप राघवस्त्रण्डभानुरिव मेघमण्डलम् ॥ ८५ ॥

इति विदर्भराजविरचिते चम्पूरामायणे
श्रीमदयोध्याकाण्डः समाप्तः ।

---

अथारण्यकाण्डः ।

प्रविश्य विपिनं महत्तदनु मैथिलीवल्लभो
महाबलसमन्वितस्त्वलितनीलशैलच्छविः ।
निशाचरदवानलप्रशमनं विधातुं शरै-
श्चचार सशरासनः सुरपथे तडित्वानिव ॥ १ ॥

ततः । कण्डूलापनयनपटु शुण्डालकपोलकषणविषमि-
तानमितविकटविटपसालखण्डनिर्य्यातनिर्य्यासगन्धानप्या-
त्तगन्धान् विदधानैश्चाहुतिगन्धैर्धूमस्तोमैरनुमीयमाना विना
भूतजलाशयानाश्रमभागानभितश्चरतोरातिथ्यश्रमितमार्ग-
श्रमयोर्दाशरथ्योरध्वानं तरसा रुरोध विराधाभिधानो यातु-
धानः । स एव रोषभीषणश्विशिखशिखरावर्तितविविध-
मृगशवशतः शतक्रतुतनयः सीतामपजहार व्याजहार च
दाशरथी । कौ युवां युवानौ कुतस्त्यौ वामाचारवत् प्रति-
भाति मे वा माचारः । चीरं वपुषि जटाशिरसि करे च
चण्डकोदण्डः क्वायमाकल्पः क्वचन कल्पलताकल्पेयमनल्पा-

भरणा तरुणीति। दाशरथिरपि कथितनिजान्वयो विराधाङ्के वेपमानां विदेहराजदुहितरं विलोक्य सकोपः सौमित्रिणा साकं रक्षो वक्षसि शिलीमुखान्निजघान। ततः।

विशिखे विशिखे तत्र विधाय वरवर्मणि।
सीतां निक्षिप्य चिक्षेप शूलं रक्षो रघूद्वहे॥ ॥

तदनुशूलमखण्डयदञ्जसा शितशिखं रघुनायकसायकः।
नियतमेव विराधविरोधिनां हृदयशूलमपि त्रिदिवौकसाम्॥३॥

विराधोऽपि क्रुधा सरभसमभिपत्य स्कन्धे निधाय रामलक्ष्मणौ गतिनिरोधापराधपरिहरणायैव मिहिरहिमकरौ प्रस्थे वहन्विन्ध्य इव प्रतस्थे। रामस्तत्र विराधवधोद्युक्तं सौमित्रिमेव मभिदधे।

यातु नः पथवो सेयं यातु नश्वास्य लक्ष्मण।
यातु कामं तयेवेदं यातु कामं न हन्यताम्॥४॥

अयि कवलय माममूनिमुञ्चेत्यति करुणं वदतीमवेक्ष्य सीताम्।
अरमरचयतामुभावसिभ्यां पिशितभुजं भुजभारहीनमेनम्॥५

ततस्तीक्ष्णतरक्षुरप्रप्रहरणगवाक्षितवक्षसा रक्षसा न परित्यक्तेषु प्राणेषु। पराक्रमाविषयपराक्रमौ प्राक्रमेतामितौ तदङ्गगलितरुधिरधारासेकेन खननक्षमायां काननक्षमायां राक्षसशवोचितं विकटमवटमुत्पादयितुम्। तत्क्षणमेव क्षणदाचरोऽपि सञ्जातप्रत्यभिज्ञः सन् रामं व्यजिज्ञपत् आत्मनो गन्धर्वकुलसम्भवं रम्भापरिरम्भं तच्छ्रवणकुपितवैश्रवणदत्तरक्षोरूपिणीं शापव्यापदं तस्यास्तथाविधमवसानञ्च।

रक्षो वधः प्रकृत इत्ययमेव शंसेत्
स्वर्गाय गायक पदं गमितो विराधः ।
नागाश्रयाय वपुरस्य वृद्धिदितीव
श्वभ्रे तदक्षि पदिषुप्रहतं स रामः ॥ ६ ॥

तदनु नाक लोकभजनाय पुरुहूतेन समाहूतस्य भग-वतः शरभङ्गस्याश्रमपदं रघुपतिरभजत । तत्र ।

दशशतनयनेऽपि वीक्ष्यमाणे
दशरथपुत्रसिषेविषेव जाता ।
मनसिजशरभङ्गकारिवृत्ते
मनसि मुनेः शरभङ्गनामभाजः ॥ ७ ॥

स मुनिराश्रमस्थं काकुत्स्थमातिथ्येन समाराध्य तत्-सान्निध्याच्छुद्धां मन्त्रपूतामाहुतिमिव आत्मनस्तनुं तनून-पाति पातयित्वा शाश्वतं पदं समाश्रितवान् । ततः सुतीक्ष्णस्य तपसः सुतीक्ष्णस्य तस्य निदेशाद्दशास्यकादुच्च-लितः सलिलनिधिपानसम्भावितजीवनाभावशङ्कया शरणा-श्रयणाय लम्बमाननीलाम्बुदकुटुम्बसन्देहावहेन नाना-नोकहनिवहेन पिहिताभोगमगस्त्याश्रममाससाद । अकथ-यच्च मैथिलीम् ।

तस्येदमाश्रमपदं सरसीरुहाक्षी
संख्याविहीनमहिमैक निकेतनस्य ।
भर्त्ता समस्तसरितां कुपितस्य यस्य
हस्तारविन्दमकरन्ददशामवाप ॥ ८ ॥
इह समदगजेन्द्रन्यस्तहस्तातिभारात्
पृथिविनमितशाखः सप्तकीव्रच एषः ।

अभिनयति निकामं सङ्गतोच्छ्रायहानि
मुनिवरकरपाताद्भुग्नविन्ध्याद्रिमुद्राम् ॥ ९ ॥
अस्मिन् महापथधिया वदनं विगाह्य
निर्गन्तुमक्षमतया जठरे लुठद्भिः ।
वन्यैर्गजैरजगराः पिशिताशनेभ्यो
वातापिदानवदशामुपदेशयन्ति ॥ १० ॥
तत्र । चुलकगतसमुद्रास्वादने कुम्भयोने-
रितरकरनिरस्ता मक्षिकोत्सारयोत्या ।
गगनगतिविहीना ये घनाःपल्वलान्ते
विपिनमहिषवेषैः केवलं ते बलं ते ॥ ११ ॥

एवं विपिनविलोकनविस्मितमतिस्तदुटजनिकटमासाद्य रामः शिष्यैः प्रवेशितः सकललोकवन्द्यमानचरणारविन्दमरविन्दभवमिव वृन्दारकवृन्दैः परिवृतं कोपहुङ्कारनिरहङ्काराय नहुषाय भुजङ्गभावदूषिताय दत्तभुजङ्गमाय मतिनिरोधकल्पवैपुल्ययोर्दुरवगाहमहावनयोर्विन्ध्यशैलसिन्धुराजयोर्गाधेताधाता तस्करकरोदरमुदरजातजातवेदोजितवातापिदानवावलेपं लोपामुद्रावल्लभं सकलसरिद्वल्लभनिःशेषीकरणवाडवं ब्राह्मणश्रेष्ठमपास्तसमस्ताशमभ्युपगतदक्षिणाशं दूषीकतानजन्मानमपि कुम्भजन्मानं भगवन्तमगस्त्यमपश्यत् ।

प्रभामिवार्कीं तमसान्निहन्त्रीं
ब्राह्मीं दधानं नियमेन लक्ष्मीम् ।
तपोनिधिं शौर्यनिधिः प्रपन्नः
स्वनाम सङ्कीर्त्य ननाम रामः ॥ १२ ॥

ततः परमहर्षेण महर्षिणा प्रणीताभिराशीर्भिः सह सुरशासनं शरासनं सरसिजासनास्त्रं सौचामणं तूणीर-युग्मं रुक्ममयकोशं खड्गञ्च प्रगृह्य तदाज्ञया गोदावरी-तटप्रकटितां पञ्चवटीमसेवत। तत्र विस्तृतपचद्वन्द्वमपत्र-प्रतिद्वन्द्वशौर्य्यं शौर्य्यावस्थाप्रत्ययाय कृतापरोचमिव ताच्र्यं महामहीध्रकल्पं गृध्रराजमद्राक्षीत्।

पानेन हीनजलमब्धिमपास्य नूनं
मैनाक एष मुनिमाश्रयतीति जाताम्।
शङ्कामिमां रघुपतेः कथितात्मवंश-
स्त्वत्तातमित्रमहमित्यहरज्जटायुः ॥ १२ ॥

रामस्तु दशरथमिव तं पश्यन् काश्यपकुलसम्भूतं सम्पातेरनुजं अनुजरचितपर्णशालः पञ्चवट्यां कञ्चित्कालं गमयामास। अथ कदाचिदुपचीयमान मनोभववैभवः पाककपिशकलममञ्जुमञ्जरीपुञ्जपिञ्जरीभूतकेदारप्रपञ्चः प-ञ्चवाणप्रयाणोचितवीरपाणवत् पत्रपुटपातदृश्यावश्याय बि-न्दुसन्दोहश्चन्द्रातपे निरानन्दतां चन्दनानुलेपने निर्लोलु-पतां चन्द्रशालायां निरागतां चन्द्रकान्तस्थले निरास्थतां वातायनसेवने निरुत्सुकतां वापीकूपोपकण्ठे निरुत्क-ण्ठतां वासरावसाने निरादरतां वारिविहारे निरा-काङ्क्षतामुत्पलमालायामुपेक्षतामुपवनभजनेऽप्युद्विग्नतां ज-नानां जनयन् गम्भीराभोगगर्भगृहस्य च घनेष्टिकार-चितभित्ति स्वच्छतिरस्करिणीपटलस्य च शशोदरलोम-मृदुकम्बलस्य च कालागरुधूमस्य च काश्मीराङ्गरागस्य च निधूमाङ्गारभरितहसन्तिकायन्त्रस्य च सुभगङ्करः करेणु-

करनिकरवत्मकणायमानतुषारधूलिधूसरवासरः सरसीरुहगहनदावपावकस्तुहिनन्नणितलासिकाधरदूरीकृतवंशकृत्यः प्रक्षीणतारुण्यपरस्त्रीकाङ्गनाङ्गवत्प्रयातसौभाग्यप्रपासविवेशस्ता लब्धविश्रान्तिकरः कामिनीस्तनभरगिरिदुर्गसीम्नि निर्भयनिलीननिदाघभावो दिवाभीतव्रातस्याप्यनतिभयङ्करदिवाकरस्वकीरनिकरस्याप्यनतिचेमङ्करनिशाकरः कादम्बकदम्बस्यापरमतिप्रीतिकरकमलाकरः करयुगकृतस्वस्तिकाबन्धनतया नीहारान्तकाशङ्कया हृदयकमलमिव गोपायन्तमश्रान्तदन्तवीणाव्यापारवेपमानाधरपुटतया शीतिकापिशाचिकानिर्हरणाय निपुणं मन्त्रजपमिव कुर्वन्तमविरलपुलकपालीकम्बलितकलेवरतया सकरुणविधिवितीर्णरोमकम्बलकृताङ्गरक्षमिव भिक्षामटन्तं दुर्गतवर्गं निद्रे्णा कदाचिदपि कमलानालोकयतीति तस्यै सासूय इव तदीयाशासतामरसकोशं नाशयन्नङ्गजमतङ्गजकरपुष्करोत्थितशीकरनिकराकारैरतिपरुषस्मरशरजाततापप्रतप्तगगनाङ्गनाङ्गस्रवत्स्वेदबिन्दुसदृक्षैरक्षीणमहिमहिमप्रसारैरध्वगान्तःकरणानि सीमन्तयन् हेमन्तसमयः समुदजृम्भत।

यत्र कान्ता न पश्यन्ति कान्ता विरहवह्निना।
निशावसानवेलाञ्च वेलाञ्च व्यसनाम्बुधेः॥ १४॥

तत्र पर्णशालामध्यमध्यासीनं लक्ष्मणाग्रजमुपससर्प शूर्पणखा।

तस्मिन् ज्जृम्भितोष्णस्तनतटदयिताहीनसंहारकाले
काले प्रालेयधाराकवचितगगनाभोगदिक्चक्रवाले॥
कामान्धा राक्षसी सा पतिमतिमतनोन्मैथिलीप्राणनाथे

लाक्ष्मीलीलारविन्दे नवपिशितधियन्तन्वती श्येनिकेव ॥१५॥

ततस्तेन जानकी जानिरिति जानीहि जनममुं ममानुजमतिमनुजबलमबलावियुक्तं युक्तमाश्रयितुं तवेति रामेण प्रत्याख्याता सौमित्रिमुपेत्य यथामनीषितमभाषत। तेनापि भद्रे! तस्यार्यस्य दासोऽहं दासभार्य्यापदमनार्य्यमार्य्यायाः कुलसम्भूतायास्तस्मात्तमेव भजेथाः। किञ्च। क्रूरसत्वभयानककाननसञ्चारा चतुरां विहाय वैदेहीं तव भवतीमेवासौ परिग्रहीष्यतीति लक्ष्मणेनाभिहिता विहितं हितमिति तदीयं वचनममनुत।

दशरथात्मजयुग्मनिरीक्षणक्षणसमाकुलबुद्धिरियं दधौ।
उभयकूलसमुत्थितशाद्वलभ्रमगतागतखिन्नगवीदशाम् ॥१६॥

वृषस्कन्धौ वृषस्कन्धं राघवं रावणानुजा।
भूयः शूर्पणखा भेजे शूर्पकारातिबाधिता ॥ १७ ॥

तदनु जनकदुहितुरनितरयुवतियोग्यं भाग्यं रामस्य रामणीयकं निरूप्य पुनरेवमचिन्तयत्।

लावण्याम्बुनिधेरमुष्य दयिता मेनामिवैनं जनं
कस्मान्नासृजदस्मदन्वयगुरोरुत्पत्तिभूः पद्मभूः।
आस्तामेतदरण्यवासरसिके! हा कष्टमस्मिन् जने
कान्तिं काननचन्द्रिकासमदशां किं निर्ममे निर्ममे ॥१८॥

सीतामाहर्त्तुकामामसुलभविषयप्रार्थनोद्दामकामां
सौमित्रिः शस्त्रपाणिर्दशमुखभगिनीं तामनार्य्यां निवार्य्य।
कामक्रोधाधिकानामहमहमिकया प्रेङ्खतामायतानां
तस्याः श्वासानिलानामकुरुत तरसा मार्गविस्तारकल्पम् ॥१९॥

ततस्तस्या निकृत्तकर्णनासिकायाः कनीयस्याः परि-

भवं वदने वचने च दृष्ट्वा श्रुत्वा च जनस्थानवर्ती समरमुखमुखरः खरश्चतुर्दशसहस्रसंख्यश्चतुर्दशाध्यक्षरचितं रक्षोबलं रामलक्ष्मणौ जिघृक्षुः प्रेषयामास । अथ दाशरथिर्निरीक्ष्य दिक्षु रक्षोगणमुपसर्पन्तमपसर्पभूतया तया शूर्पणखया निदर्शितसरणिमरणिमिव मन्थनात् प्रागनाविष्कृततेजःप्रसरं सीतारक्षणे लक्ष्मणमादिश्य यातुधानवधं तथाविधमतनुत । तपोधननिधनकरकरनिकुरम्बमिदं परुषभाषणस्पृहयालु तालुजालमिदं परदारनिरीक्षणनिरपत्रपनेत्रद्वन्द्वमिदमिति निशिततरशरशतशकलितनिशिचरावयवानाहृत्य प्रत्युटजं दर्शयद्भिस्तपोधनाध्वशुद्धिं विदध्वमिति गृध्रराजनिदेशादिव देशान्तरादापतद्भिः पतद्भिः कङ्कप्राचीकप्रायैरनवकाशमभूदाकाशम् । तत्र निकृत्तशिरसि त्रिशिरसि विस्रगन्धिना शरीरस्रुतवसास्रोतसा प्रेत्यापि क्रियमाणाश्रमदूषणे दूषणे रोषभीषणवीक्षणखरः खरः राघवमाह्वयायाज्ञगत । तत्र विपश्चिद्भिरप्यनिश्चीयमानजयापजयमनिमिषैरप्यननुसन्धीयमानशरसन्धानमोक्षमभूदभूतपूर्वं द्वन्द्वयुद्धम् । तत्र खरो गृहीतकोदण्डस्त्वसकृदनुभूयमाननमनोन्नमनायासः समरसमापनचतुरश्चतुराननास्त्रसन्धानार्हं दाशार्हं शरासनं ग्राहयितुकाम इव रामहस्तात् प्राक्तनं चापं शरैरपजहार । सोऽपि कोपपावकपावकितामनः कुम्भसम्भवदत्तं धनुराधत्त । खरपरुषिशरासने गृहीते खरकिरणान्वयशेखरेण तेन । खररघुवरयोः रणं समाप्तं खरनखरायुधयोरिव क्षणेन ॥२०॥

खरवधपरिशुद्धे दण्डकारण्यभागे

मुनिभिरभिहितानामाशिषां तादृशीनाम् ।
स्वयमचरमपात्रं स्वैर्गुणैर्मन्यराभू-
स्तदनुमनुकुलेन्दुः सानुजः शौर्यराशिः ॥ २१ ॥

तथाहि

प्राग् मन्थरेति महिषीति वरद्वयीति
धर्म्मव्ययव्यथितभूपतिभारतीति ।
काकुत्स्थकाननकथेति च सन्ति संज्ञाः
पौलस्त्यभीतभुवनत्रयभाग्यपङ्क्तेः ॥ २२ ॥

अथ शूर्पणखा लङ्कामपि जनस्थानमिव विजनस्थानं काकुत्स्थेन कारयितुं दशकण्ठोपकण्ठे कृत्येव निपत्य रामलक्ष्मणयोर्याथातथ्यं वैदेह्या देहसौन्दर्य्यं खरप्रमुखैः साकमनीकस्य चतुर्दशसहस्रसंख्यस्य पञ्चताकरणकारणभूतामात्मावज्ञाञ्च विज्ञापयामास ।

स्वदण्डकायां कृतदण्डकायां स्वसारमेनां प्रथितस्वसारः ।
निशाम्य रामस्य निशम्य वृत्तं चक्रे क्रुधं राक्षसचक्रवर्त्ती ॥२३॥

ततः प्रस्थाप्य जनस्थाने राक्षसानष्टौ नष्टमतिरयं ताटकेयं हाटकमृगं पुरस्कृत्य सीताह्वयां हरिणीं ग्रहीतुं तस्यावसथमाससाद । मारीचोऽप्याकर्णितरावणमतिः प्रयत्नशतैरप्यनिवार्य्यमाणे तस्मिन् रावणे सुबाहुमेव बहुमन्यमानो गत्यन्तराभावाद्दभ्यर्थनामभ्युपेत्य जातरूपमयमृगरूपं गृहीत्वा सीतां वञ्चयितुं पञ्चवटीमगाहत । दशमुखोऽपि जलधरपथस्थापितरथो दाशरथिविघट्टने कृतास्यस्तस्थौ ।

विपिनमवजगाहे राक्षसानां करीटी-

रसकृद्रसकृदाविर्बाष्पमालोक्य शोचन् ।
कृतरुचिरिव वर्त्मन्यङ्कुशानां कुशानां
पथिकचरणलाविन्यङ्कुरेन्यङ्कुरेष: ॥ २४ ॥

तदनु जनकपुत्रीयाच्ञया तज्जिघृक्षु-
र्हरिणमनुजगाहे चापमादाय राम: ।
समय इति च मेने पाशमातत्य मृत्यु:
कुशिकसुतमखारौ भ्रष्टमेनं जिघांसु: ॥ २५ ॥

आकृष्य दूरमुटजादथ दर्शिताङ्ग:
क्रव्याद एष रघुनाथशरेण विद्ध: ।
कार्त्तस्वरेण तनुतां विजहौ हतोऽसौ-
त्यार्त्तस्वरेण सह रामवचोनिभेन ॥ २६ ॥

एतदाकर्ण्य विदीर्णहृदया हृदयदयितप्रेम्णा कर्त्तव्याकर्त्तव्यमजानाना जानकी जानीहि भ्रातरमिति सौमित्रिमादिदेश । ततश्चार्येण कार्य्यमिदमादिष्टं दिष्टदोषान् मिथ्याप्रतीति: परा भवति भवतीं परं त्रिभुवनैकधनुर्धरस्य शौर्य्यराशे: रामार्य्यस्य क: श्रद्दधीत कौणपघुणनिमित्तां विपत्तिमिति प्रणिपत्य प्रत्याचक्षाणं हृदयतोदकारिण्या वाण्या मोहविह्वला सा बह्वतर्ज्जयत् । भूयोऽपि लक्ष्मण: परुषभाषणभाषिणीं प्रजावतीमेवमभाषत ।

सुमुखि ! मम सुमित्रा सत्यमम्बा यदासीत्
तदभजमवितर्कं मातृसम्पर्कसौख्यम् ।
अहह विधिविपाकादद्य हरन्ती दुरुक्तिं
त्वमसि विपिनमध्ये मध्यमाम्बा हि जाता ॥ २७ ॥

इत्युक्त्वा भ्रातृजायां भ्रातृसमीपगामिनि लक्ष्मणे तत्-

क्षणमेव रन्ध्रान्वेषी दशकन्धरः स्यन्दनं विहाय विहायस्थलादवतीर्य निजान्तःकरणेऽपरमात्मं रागं बहिः प्रकटयन्निव धृतकाषायपटसंन्याससवेषः पर्णशालामाससाद।

रामाश्रमाद्विगतलक्ष्मणसन्निधानात्
सीतां जहार चपलः पिशिताशनेन्द्रः।
मालां महोत्पलमयीं पललभ्रमेण
देवालयादिव निरस्तजनादलर्कः॥ २८॥

हा नाथ! क्व चिरायसीति बहुशो व्याक्रुश्य बाष्पाविलं
चक्षुर्दिक्षु विमुञ्चतीं दशरथस्यायामवेक्ष्य स्नुषाम्।
रे रे रावण! मा वधूं प्रतिरुधा मुञ्चेति गृध्राधिपो
रुध्वाध्वानमनल्पकोपमकरोदग्रे वर्णं रावणम्॥ २९॥

समभूत्समये तस्मिन् समरं समरंहसोः।
मिथो मथनसंक्रुद्धगृध्रराक्षसराजयोः॥ ३०॥

दशमुखरथमाशु ध्वस्तरथ्यं विसूतं
शिथिलतरवरूथं शीर्णचक्रं स चक्रे।
गरुदभिहतशक्तिप्रासबाणासिखड्ग-
त्रिशिखविशिखतूणीपाशकुन्तः शकुन्तः॥ ३१॥

राक्षसासिक्षतः क्षिप्रं पपात पततां वरः।
मैथिलीपक्षपातेन पक्षपातमवाप सः॥ ३२॥

तत्क्षणमन्यरथाधिरूढेन रावणेन भूयोऽपि नीयमाना जानकी ऋष्यमूकशृङ्गसङ्गतप्लवङ्गपञ्चके पक्षचूडाधर इव क्ष्माधरकुमारे कस्मिंश्चित् सुग्रीवसात्कृतदशग्रीवप्रतापामलसदृशं बालिविनाशपिशुनं महोल्कापातप्रतिमं रामसाहाय्यप्रोत्साहनाय पुत्रमभिपतत्पतङ्गबिम्बशङ्कावहे

कनककपिशकौशेयमयोत्तरीयां त्वरितमाभरणभारमपातयत् तत्पतनमपि स्वतेजःपतनमिव न पश्यन् लङ्कालङ्कारभूतामशोकवनिकां मैथिलीमनयदनयशौ दशग्रीवः।

अशोकवनिका लेभे राक्षसी परिवेष्टिताम्।
सीतां मारुतिबालाग्निस्तम्भनाद्दामिवौषधिम् ॥२३॥
काकुत्स्थोऽप्यथ रक्षसामधिपतेर्मायामृगावेष्टितो
कृत्वा हाटकताटकेयहरिणं शार्दूलविक्रीडितम्।
आगच्छन्ननुजेन तत्र गदितामाकर्ण्य वार्त्तां ततः
सीतासङ्गमलालसस्तदुटजं रामः प्रतस्थे द्रुतम्॥ २४ ॥

अयं कथं स्यादिति बाष्पगर्भमालोकमानो वनदेवताभिः।
विलोकयन् केवलपर्णशालां विलीनचेता विललाप रामः ॥२५॥

हा कष्टमत्र न हि सा किमिदं प्रवृत्त-
मालोकयामि चटुलामिह पादमुद्राम्।
मां वीक्ष्य नूनमपटुीतमृगं मुहूर्त-
मन्तर्हिता तरुषु रोषवतीव सीता॥ २६ ॥
त्वदभिलषितपूर्त्यै वञ्चितः पञ्चवट्या-
मचरमचरमोऽहं मोहभाजां प्रजानाम्।
तदिह सरलबुद्धे नैष रोषस्य कालः
सुमुखि! मम मुखं किं सोढसीतावियोगम्॥ २७ ॥
यद्यस्ति कौतुकमपूर्वमृगे मृगाक्षि
चान्द्रं हरामि हरिणं मम सन्निधौ हि।
यावन्न मुञ्चसि मया हृतमेणमेनं
तावद्दधातु तव वक्त्रतुलां मृगाङ्कः॥ २८ ॥
स प्राणा चेज्जनकतनया किन्न तिष्ठेत मध्यं

हिंस्रैः सत्वैर्न किल विहृता रक्तसिक्ता न भूमिः ।
गोदावर्याः पुलिनविहृतिं रामशून्यानकुर्याद्
युक्तं नक्तञ्चरकवलनात् संस्थिता सर्वथा सा ॥ ३९ ॥
लोकान्तरप्रणयिनं श्वशुरं प्रणन्तु-
मासन्नकालमतिलङ्घ्य यदि प्रयासि ।
विज्ञाप्य मामपि समाह्वय साध्वि तस्मै
सौमित्रिरेव भरते निदधातु राज्यम् ॥ ४० ॥
इत्थं विलप्य दयितां विपिने विचिन्वन्
रामो न तत्र धृतिमान् न च लक्ष्मणोऽपि ।
मादृग्विधामपि दशां कथयन् स्ववाचा
वल्मीकजन्म मुनिरेव कठोरचेताः ॥ ४१ ॥

तत्र प्रारभमाणो प्रयाणान् प्राणानवष्टभ्य जटायुः क्रियमाणसीतान्वेषणं सलक्ष्मणं राममालक्ष्यन्नवोचत । आयुष्मन् ! मां खड्गविक्षतपक्षतिं क्षितितले निक्षिप्य क्षिप्रतरं जहार मैथिलीं रावण इति ।

स्वयमपि शरभङ्गस्तोमतां भङ्गहीनां
सपदि गतिमवाप्तः संहृतायुर्जटायुः ।
नयनसलिलमिश्रं राम हस्तेन दत्तं
दशरथदुरवापं प्राप नैवापमम्भः ॥ ४२ ॥

अथ दक्षिणारण्यगामी प्रस्थिते काकुत्स्थे राक्षसी काचिदयोमुखी नाम सौमित्रिमभिभूय तदीयेन शस्त्रेण शूर्पणखा छिद्रिमभजत । तदनुक्रोशारण्य सरण्या प्रयातावेतौ महर्षेः स्थूलशिरसः शापात् कौणपतां प्रपन्नः पन्नगपतिभोगभीषणाभ्यां भुजाभ्यां बबन्ध यथार्थनामा कबन्धः ।

तदनन्तरमनस्युपात्तेषु रावणीनेत्रेषु सदोत्पादितवारिभ्यां तरवारिभ्यां रामलक्ष्मणयोः कबन्धबाहुयुगलं कदलीलावमिवालूयत ।

तदनु दनुकबन्धेनादराद्दर्थितौ तौ
गिरितटभुवि देहं देहतुस्तस्य भौमम् ।
अकथय दथशापापाय तुष्टः स रामं
तपनतनयमैत्र्या मैथिलीं प्राप्स्यसीति ॥ ४१ ॥

तस्मिन्नृश्यमूकमार्गमुपदिश्य स्वर्गं गते मतङ्गाश्रमवासिन्या शबर्याकृतां सपर्यां रामः परिगृह्य तदनुज्ञया मनोज्ञकूजितविहङ्गमृगगणविहारमनोहरं गह्वरपदमवगाह्य व्याकोशकुशेशयपरिचयकषायैर्वनदेवता लता दोलानुकूलैः कुलायतलीलापरवशवशावल्लभमदाम्बुचुम्बिभिः शम्बराशातिशरधिसङ्घटतटसहकारशिखरविसरदासवासारसीकरशेखरैर्विविधलतालासिकालास्योपदेशदेशिकायमानैः कायमानसमानाभोगलतागृहकेलिलुब्धलुब्धकपुरन्ध्रीशिथिलधम्मिल्लमल्लिकागन्धमांसलैर्मल्लिकाक्षपक्षविक्षोभक्षोदीभूतपाथःपाथेयैस्तटवनपवनैरनुकम्प्यमानः पम्पामभजत् ।

इति श्रीमद्विदर्भराजविरचिते चम्पूरामायणे
श्रीमदरण्यकाण्डः समाप्तः ।



## अथ किष्किन्धाकाण्डः ।

सतां सतां बुद्धिमिव प्रसन्नां
पम्पां वियोगज्वरजातकम्पः ।
विलोकयन् लोकनिविष्टकीर्त्ति-
रात्तिं रघूणां प्रवरः प्रपेदे ॥ १ ॥

ततस्तस्यास्तटवने नानानोकहनिवहपरिष्कृते निभृतेतरपरिभ्रमणपरभृतव्रातचञ्चूमथविपञ्ची समुदञ्चितपञ्चमां चिता सन्तताकुञ्चितपञ्चशरशरासनशरासारवञ्चितसञ्चारपथिकप्रपञ्चाप्रमदचञ्चलचञ्चरीककुलकञ्चुकितमाधवीमाधवीभूतिरुदजृम्भत ।

यत्र कान्तैर्वियुक्तानां युक्तानामपि सुभ्रुवाम् ।
दोलाकर्म्म वितन्वन्ति मनांसि च वपूंषि च ॥ २ ॥

करतलैरपचायमथेच्चणैरपचयञ्च वनेषु जनेषु च ।
सुमनसां मनसामपि यद्दिने विरचयन्ति विलोलविलोचनाः॥३॥

तस्मिन् समयरसमरसमये पम्पां समन्तात् पर्य्यटन् पर्याकुलहृदयो हृदयदयितां हृदि लक्षयन् लक्ष्मणमिदमभाषत ।

आधौ सिद्धौषधिरिव हिता केलिकाले वयस्या
पत्नी त्रेता यजनसमये क्षत्रियाख्येव युद्धे ।
शिष्यादेव द्विजपितृसमाराधने बन्धुरार्त्तौ
सीता सा मे शिशिरितमहाकानने का न जाता ॥४॥

मलयगिरिचरोऽयं मन्मथाधोरणाज्ञा-
मथितपथिकवर्गो मारुतव्याजहस्ती ।

विरचयति मदीये शैत्यसौरभ्यमान्द्य-
विविधमदसमृद्धो मानसे चञ्चलीलाम् ॥ ५ ॥

एवं दुःसहविरहक्रशानुकृशानुभावं भावसन्धुक्षणविच-
क्षणलक्ष्मणवचनधार्य्यमाणधैर्य्यं राघवमग्रतः सुग्रीवो वि-
लोक्य वालिप्रणिहितापसर्पधिया सुदूरमपससर्प । स तु
संमन्त्र्य मन्त्रिभिस्तयो राशयमवजिगमिषुराञ्जनेयं प्रभञ्जन-
सञ्जातं प्राहिणोत् ।

तपनपवनयोर्यः प्राप्तवान् पुत्रभावं
शतमखकृतवाणी विद्यया जन्मना च ।
स तु दशमुखकीर्त्तिस्तोमसोमस्य पञ्च-
शरम इव तनूमान् प्राप रामं हनूमान् ॥ ६ ॥

स एव कौशलभिक्षुकवेषः सविनयमेतौ आबभाषे ।
भवन्तौ कतरौ कान्ताकारौ कान्तारं कथमिदमवातरतां
विचित्रतरजिष्णुकोदण्डमण्डितावपि दिनस्यास्य सुदिनत्वा-
द्भवन्तौ न जीमूतौ जटावल्कलयुतावपि जङ्गमत्वाद्भवन्तौ
न कल्पवृक्षौ तमोपहालोकललितावपि यौगपद्य भास्कर-
सान्निध्याद्भवन्तौ न पुष्पवन्तौ ।

कुशस्तम्बेऽपि संभूतं सौरभ्यमिव भासते ।
तपोवेषेऽपि सौन्दर्य्यं युवयोर्युवयोगिनोः ॥ ७ ॥
युष्मद्वार्त्तासुधास्वाद लुब्धयोः श्रोत्रयोः सुखम् ।
स्वयमेव गृहीतुं मे जिह्वा प्रह्वा प्रवर्त्तते ॥ ८ ॥

कश्चिदस्ति समस्तवानरपतिः सुग्रीव इति तेन भ्रातृ-
भयादृष्यमूकमुपाश्रितेन युवाभ्यां सह सख्यमिच्छता प्रेषितं

हनुमदभिधानं दधानं भिक्षुरूपप्रतिच्छन्नं वानरमिमं आञ्जनेयं प्रभञ्जनसञ्जातं जानीतमिति । ततस्तदीयं वचनमाकर्ण्य कर्णयुगलसुधावर्षि दैवर्षि प्रतिमो दाशरथिस्तद्दर्शितेन पथा तमुपाश्रित्य विरचितभुवनसौख्यं सख्यं तपनतनयेन साकमग्निसाक्षिमकरोत् ।

योगं वितन्वति हनूमति राघवस्य
वैवस्वतेन हरिणा समवर्त्तिना च ।
मेने विधिर्घटयितुं हरिमिन्द्रपुत्रं
वैवस्वतेन हरिणा समवर्त्तिना च ॥ ९ ॥

ततस्तत्क्षणं सम्भूतविस्रम्भाय प्रतिश्रुतवालिवधाय कथित निजदशाय दाशरथये सुग्रीवो दशग्रीवनीयमान सीतापातितानि कानिचिदाभरणान्यदर्शयत् ।

प्रत्यर्पितानां कपिपुङ्गवेन रामः स्वकान्ता छृतभूषणानाम् ।
संस्कारहान्या परिधूसराणां प्रक्षालनं बाष्पजलैश्चकार ॥१०॥

ततः सौमित्रिभणितनिर्बन्धसम्भृतधैर्य्येण रामेणानुयुक्तो वालिवैरकारणं भानुसूनुरित्थमकथयत् । पुरा खलु निखिलरिपुकुलतिमिरनिचयमरीचिमालिनं वालिनं मायावी नाम दानवः कश्चन दुन्दुभेर्भ्राता युद्धाय कश्चा तद्बलचकितधृतिहरगनगरकुहरमवगाहत । तदनुगाहमानेन मानशालिना वालिना विलमुखपालनाय निहितस्तस्योत्थानवेलां प्रतिपालयन्नहं चिरकालेऽप्यतीते क्षीनस्यातं मांसमिश्रतमसृग्पूरमवेक्ष्य भ्राता मे निहत इति निरचिनवम् । तदनु विपुलोपलपटलपिहितविलमुखः स वली मुखबलस्तस्मै दत्त्वा स्वयमुदश्रुदकनैवापमवापं शोकान्धः किष्कि-

श्रेयम्। अथ विदितवृत्तान्तैरमात्यैरभिषेचिते मयि मायाविनं निहत्य खरतरभुजपरिघविघट्टितबिलवदनपिधानस्तरसा रसातलात् पुरं प्रविष्टोऽतीव रुष्टः प्रभ्रष्टाशयं बद्धुमः प्रणिपतन्तं प्रतिपादितयाथातथ्यं मां नगरान्निरागसमपि निरकासयत्। तदनु तदनुधावनात् कां दिशो कस्य मम पर्वतेऽस्मिन् कुतोभयसञ्चारकारणमाकर्ण्य तां पुरेकदा बालिनमतुलभुजबलमखिलकुलाचलचलनचतुरं चतुरर्णवकज्जलजालं दुन्दुभिर्नाम वृन्दारकारिलुलायकायः परिभूय समरे समतिष्ठत। निहतस्य तस्य शवं बाहुबलावलेपेन बाली सकललोकविलयविलोलदनिलबलचलिततूलतुलया मतङ्गाश्रमचिती क्षिप्रमक्षिपत्।

अत्र बालिकरगुरुनिष्पतद्दुन्दुभिप्रसृतरक्तबिन्दुभिः।
पाटलं तदभवन्मुनेर्वनं तस्य चक्षुरपि रोषपाटलम् ॥११॥

ततो मतङ्गशापबलाद्बालिवर्ज्यमृष्यमूकं विमृश्यास्मिन् विस्मृतपुरनिवाससुखे सुचिरं निवसति सति मयि।

अयमसुखय देवं देवधीमान् हनूमान्
रिपुरिति भवतोऽपि त्रस्तमस्तौजसं माम्।
दवहुतवहधूमस्तोम इत्यम्बुवाहा-
चकितमिव मयूरं मारुतो वारिशीतः ॥ १२ ॥

श्रुत्वाथ रामः शोकोदग्रां सुग्रीवगिरम्। यद्येवं महाभाग! माभैषीर्मम शिलीमुख एव वलीमुखस्य तस्यासून् कालक्षेपमपास्य पास्यतीत्युक्त्वा तत्प्रत्ययार्थं पादाङ्गुष्ठेन प्रेरितदुन्दुभिकलेवरस्तत्क्षणमेवाप्यशमस्य सुग्रीवस्य प्राग्यमया सप्तभुवनभवनस्तम्भसम्भावनया किल समधा धात्रा वर्धमान-

परिणाहरोहान् सप्तसालानप्यविधेय यातुधानकुलविविध-वधविधायकेन सायकेन विव्याध । सोऽयं सायको निकट-गिरिकटकमपि पाटयामास ।

निर्भिन्न सालकटकोऽस्मि यथा तथा त्वं
पौलस्त्य सालकटकं युधि पाटयेति ।
ऊचे शिलादलनजातरवेण नूनं
तस्मै वलीमुखवराय शिलीमुखः सः ॥ १२ ॥

ततस्तत्प्रत्याह्वतेन पुरुहूततनुजेन सार्द्धं तस्य तला-तलयुद्धे प्रवृत्ते सति सज्जनदुर्जनयोर्भेदं रूपतोऽपि विवेक्तुं अक्षमतया मनसि विचारयन् सदसि वाचं यमतामुपेत इव वाग्मी तयोरप्येकवेषकर्मणोर्भेदमनवगच्छन्नसुरारा-तिरभूद्दाशरथिः । सुग्रीवस्तु वालिबलासहनतया लब्ध-दैन्योवदान्य इव मार्गणापातमार्गे सदा चक्षुर्विक्षिपन्न-पगतधृतिररति दूरमपासरत् । तमेन ऋष्यमूके मूकवत्त्रपया निषण्णं विषण्णहृदयं दयालुरालोक्य त्रैलोक्यैकधन्वी राम-स्तच्छेदमवगन्तु कामः कामप्यभिज्ञानमालां सुग्रीवग्रीवायां बाणनिवारणनिपुणां सिद्धौषधिमिव बध्वा भूयोऽपि वालि-समाह्वायायेति तमादिदेश । पुनरप्यवाप्य किष्किन्धां पर्जन्य इव गर्जति तस्मिन् सुत्रामपुत्रस्ताराभिहितां हि-तोक्तिमतिक्रम्य दुरतिक्रमतया नियतेः समारब्धसमरो दाशरथिशरशकलीकृतवक्षःस्थलः क्षितितले सहसा पपात । अथ विदितवृत्तान्ता सन्ततास्रुनिष्यन्दकलुषिततारा तारा नगरान्निर्गत्य वारि वारितं वारणयूथपतिमिव सुग्रीव-निर्भयनिरीक्ष्यमाणमुद्गतग्रीवमुत्थातुमक्षमतया क्ष्मातलापि-

तत्कूर्परयुगलं गलगलदसृक्पूरशारशरीरं शरासनशिखरविन्यस्तहस्तेन सन्निकर्षस्थितेन काकुत्स्थेन कृतसन्तापमपेताडम्बरमिवाम्बुधिमस्तोन्मुखमिव मयूखमालिनं वालिनमालिङ्ग्य स्वाङ्कोत्तं सितदुत्तमाङ्गा रघुनाथमित्थमकथयत् ।

कारुण्यं निरवधि यत्तव प्रसिद्धं
शीतांशोः सहजमिवार्त्तिहारि शैत्यम् ।
तत्सर्वं मनुकुलनाथ ! रम्यकीर्त्ते !
मत्पापात्कथय कथं त्वया निरस्तम् ॥ १४ ॥
एवं विधे प्रियतमेऽपत्रनपेतजीवां
मां राक्षसीति रघुपुङ्गव ! साधु बुध्वा ।
बाणं विमुञ्च मयि संप्रति ताडकारे !
श्रेयो भवेद्दयितसङ्गमकारिणस्ते ॥ १५ ॥
साधारणी क्षितिभुजां मृगयेति पूर्व-
मुक्तं त्वयैव जनसंसदि सत्यवादिन् ! ।
शाखामृगी तदिह मारय मां शरेण
को नाम राम ! मृग युद्धयते मृगीणाम् ॥ १६ ॥
सन्त्रस्य पूर्वमनुतस्तव बन्धुरेष
भेजे यथाद्रिमकुतोभयमृष्यमूकम् ।
भर्त्ता ममायमपि राम ! शरैरभेद्यं
प्राप्तो मदीय हृदयस्थलमद्रिदुर्गम् ॥ १७ ॥
नाहं सुकेतुतनया नच सप्तसालो
वाली नच त्रिभुवनप्रथितप्रभावः ।
तारास्मि वज्रहृदया विशिखैरभेद्या
धन्वी कथं भवसि राघव ! मामविध्वा ॥ १८ ॥

क्षितिपतितनयानां हन्त गर्भेश्वराणां
किमु निरवधिमौग्ध्यं शौर्य्यवज्जन्मसिद्धम् ।
मम हृदि निरपाये वर्त्तमाने कपीन्द्रे
रघुवर ! यदमुष्मै तिष्ठसे चापपाणिः ॥ १९ ॥

एवं विलपन्त्या हारयिताश्रुधारायाः ताराया: परिदेवनरवैर्वाष्पाम्बुकणाभ्युक्षणैरन्तीणश्वासानिलैश्च कृताश्वास इव लब्धसंज्ञो वाली निजनन्दनमिक्ष्वाकुनन्दनं समर्पयाङ्गदमङ्गसङ्गिनीं काञ्चन काञ्चनमालां शोकावनतग्रीवाय सुग्रीवाय दत्त्वा निजभुजबलप्रशान्तासुरःप्रशान्तासुरभूत् । तत्र हा सकलभुवनबहुमत बाहुबलानलशलभायिताहितबललित गन्धर्वगन्धसिन्धुरपञ्चताकरणपञ्चाननदशमुखभुजभुजङ्गभोगनिरोधाया हितुण्डिकायितवालवलय वालिन् ! विलयं कथं गतोऽसीति वाष्पाविलमुखा वलीमुखास्तस्य राजाज्ञया यथाभिप्रेतं प्रेतकृत्यं सर्वं निर्वर्त्तयामासुः ।

अभिषिक्ते तु सुग्रीवे रामश्यामपयोमुचा ।
अभिषेक्तुं स्थिता मेघास्तन्मन्त्रीं महिषीमिव ॥ २० ॥

आर्यार्यान्वेषणा कार्य्या शरदीत्युक्तसंविदा ।
कपीन्द्रेणार्थितो रामः किष्किन्धावर्तनं प्रति ॥ २१ ॥

न योग्या नगरप्राप्तिरित्युक्तवति राघवे ।
सुग्रीव प्रार्थनाप्यासीद्भरतप्रार्थना समा ॥ २२ ॥

दत्तार्जुन विकाशेन धार्तराष्ट्रान्निरस्यता ।
तेन जीमूतकालेन देवकीनन्दनायितम् ॥ २३ ॥

तत्र ।

आसाकीं कूपलक्ष्मीमचक्रदपहारत्यामकाम्या तदा स्तां

भर्त्तारं नः सुरेन्द्रं किमपि न गणयन् वालिनं द्राग् जघान ।
इत्थं मत्वेव वैरस्फाटितघनघटारावबस्याच्छवोत्था-
माशामाशाश्च रुध्वास्तनितमिषमहासिंहनादं ततान ॥२४॥

उपचितजीवनधारा सत्पथभाजो निरस्तसन्तापाः ।
भूपा इव नव मेघाः पौलस्त्य महाबलाकुलिताः ॥२५॥

तेन किल रघुपतिरतिमात्र प्रवृत्तमन्युः शतमन्युशरासनशारतरतारा पथां घनतरघनरवमुखरितहरिन्मुखाभोगां कदम्बवनपवनाकम्पनविराडम्बरकादम्बकुटुम्बामम्बुदकदम्बकवलिताम्बरां शिलीन्ध्रसम्बन्धबन्धुरवसुन्धरां विकचकुटजनिचयकवचितमहारण्यां प्रावृषेण्यां प्रक्रियां प्रेक्षमाणो लक्ष्मणमिदमभाषत ।

अयं कालः कालप्रमथनगलाभैरभिनवै-
रहं यूनां यूना मपहरति धैर्य्यं जलधरैः ।
स्मराधारा धारापरिचयजडावान्ति सहसा
नभस्वन्तः स्वन्तः कथमिव वियोगः परिणमेत् ॥२६॥

महासमरसूचकप्रतिदिशं मनो जन्मनो
मयूरगलकाहली कलकलः समुज्जृम्भते ।
पयोदमलिने दिने पवषविप्रयोगव्यथां
नरेषु वनितासु वा दधति हन्त केका इति ॥ २७ ॥

अम्भोदरोधरविनिर्गतवारिधारा
संमर्द्द मांसलसमीरसमीर्य्यमाणैः ।
आमोद वीचिनिचयैः कुटजप्रसूनै-
राकाशमेतदवकाशविहीनमासीत ॥ २८ ॥

घनश्यामलपत्रस्य व्योमन्यग्रोधशाखिनः ।

प्ररोहा इव लक्ष्यन्ते वारिधारा धरां गताः ॥ २९ ॥
अम्भोधिपाने सलिलेन साकमापीतमौर्वाग्निशिखाकलापम् ।
तमोदरा वारिधरा वमन्ति विद्युल्लतोन्मेषमिषेण नूनम् ॥ ३० ॥

इत्थं प्रवृत्तेषु घनदिनेषु दाशरथिना कथमपि नीतेषु तदाकारकान्तिविर्जितमिव शनैःशनैर्मेघमण्डलं पाण्डुरमभूत् । तस्य चापस्य व्यापारवेलायां न सन्निधातव्यमित्यन्तरिक्षान्तरादन्तर्हितं किन्नु पाकशासनशरासनम् ।

रघुपति चापघोषसमयो भवितेति भिया-
ऽप्युपरतमुद्भटं घनघटाजनितं स्तनितम् ।
श्वसितमरुद्भिरत्र विजितः किल शान्तिमगा-
त्परिचितकेतकीकुटजनीपवनः पवनः ॥ ३१ ॥
तापोपशान्ति नटनात् कृतलोकहर्षा
वर्षा नटी गगनरङ्गतलात् प्रयाता ।
अम्भोदवाद्यमचिरेण शशाम सर्वं
निर्वापिताश्च सहसैव तडित्प्रदीपाः ॥ ३२ ॥

क्रमेण वाहिनी जातं सकलं भाविनीं वानरवाहिनीपूर्तिमसहमानमिव तनिमानमभजत । दुर्दिनापाये लङ्कायामपि राजहंस निःशङ्कसञ्चारः सम्भविष्यतीति मत्वा किल भूम्यामपि समजनि राजहंसनिःशङ्कसञ्चारः । एवं प्रोषितायामपि प्रोषितजनशेमुषीमुषि प्रावृषि ।

कामच्छिन्नपृषत्कभिन्नहृदयच्छिद्रप्रणालीगलन्
मैत्री सारलघौ प्रतिश्रुतगिरन्निर्वोढुमपत्रपमे ।
सुग्रीवे चिरसंस्थितां शमयितुं रागान्धतां तादृशीं
किष्किन्धां द्रुतमाप कोपकलुषो रामाज्ञया लक्ष्मणः ।

तत्र सौमित्रि रतीव हृष्टः प्रविष्ट इत्यङ्गदेन विज्ञापितो-ऽप्यनङ्गसङ्गरसङ्गत परिश्रमादजातजागरः सुग्रीवस्तद्दर्शन-त्राससङ्कुलितसकलप्लवङ्गकुलकिलकिलायितेन प्रबुद्धः स-चिवयोः प्लक्षप्रभावनाम्नोः प्रभावेण प्रकृतिं प्रपेदे। तत-स्तस्मिन् सुग्रीवे राघवरोषस्य कारणं निरूपयति सति मुखरितहरिन्मुखोऽभूल्लक्ष्मणज्याघोषः।

तत्रासनं द्रुतमपास्य पतिः कपीनां
तत्रास नम्रवदनो घनचापघोषात्।
सन्तोषपोषमिव भूरिभजन् भुजङ्गः
सन्तोषनाशपिशुनात्तदृणाम्रघोषात्॥ २४॥

ततः प्रतिश्रुतकार्य्यस्य प्रोत्साहनाय प्रणयकुपितेन भ्रात्रा प्रेषित एष इति मारुतिना धार्य्यमाणधैर्य्यः सुग्रीवः सौमित्रिं सान्त्वयितुं तारां प्रेषितवान्।

द्राग्वारुणीभजननिह्नुतराजतेजो
निष्क्रान्ततारमुपशान्ततमोविकारम्।
पूर्वाशया विशति सत्पथभाजि मित्रे
सत्यं निशान्तसममस्य निशान्तमासीत्॥ २५॥

सा तु रामा रामानुजमासाद्य चैव मवोचत्।
प्राचीनं व्यसनं सुरेन्द्रतनयाज्जातं वने भ्राम्यतः
सुग्रीवस्य निराकृतं खररिपोर्बाणेन सालच्छिदा।
अद्यास्य व्यसनन्तु पञ्चविशिखादासीदुपेन्द्रात्मजात्
सौमित्रे तदपि प्रशान्तमभवज्ज्याघोषमात्रेण ते॥ २६॥

तदनन्तरं तारासान्त्व न प्रशान्त कोपेन सौमित्रिणा साकं तपनतनयः सविनय माश्रित्य दाशरथिं प्राञ्जलिर्य्य-

निरूपत् । देव ! कपिबलमखिलमखिलकुलाचलनिलय-मनिलतनयेनाहृतं पुरुहूत इव पुलोमजापहारिणं बला-भिधानमसुरातङ्कं रावणं रणे हनिष्यतीति ।

ततः । ककुभि कुलिशपाणेर्मैथिलीं तां विचेतुं
विनत मथ दिशायां मारुतिं प्रेतभर्तुः ।
वरुणदिशि सुषेणं यक्षराजाश्रितायां
हरिरिति शतबलिं च प्राहिणोद्वानरेन्द्रः ॥ ३७ ॥

तदनुदिनेषु केषुचिद्गतेषु मासातिपातनासहो नियत-समुद्यदण्डः सुग्रीव इति सत्वरमितरेषु दिगन्तरप्रेषि-तेषु निवृत्तेषु प्लवङ्गबलेषु पितृपति हरिति प्रेषिता मारुति जाम्बवदङ्गद नलनील प्रभृतयोऽप्यलब्धसीतोपल-ब्धय स्तनयनागकुपित काश्यपशापभिःप्रेषितचराचरमपरचित-चार प्रान्तरं कान्तारं तीर्त्वा कान्तारे कस्मिंश्चिदसुरमेकं निरीक्ष्य रक्षः पतिरिति बुध्या युद्धाय सन्नद्धा बभूवुः ।
निशिचरपतिरित्यवेक्ष्य रोषादशनिनिपातनिभेन ताडनेन ।
असुरहितममुं प्रहृत्य दैत्यं सुरहितमेव चकार वालिपुत्रः ॥ ३८ ॥

ततस्तारेयवचनात्तत इतो विचित्य निकट गिरिसानुशयाः सानुशयाः सलिलाशया जलचरपतङ्गपतनोत्पतनानुमीय-मान पल्वलोपशल्यं किमपि बिलकुहरमवगाह्य कञ्चन काञ्चनमयं मायानिर्मितं पिहिताशानभोभागं विच्छिततपो-भङ्गायैसुराङ्गनायै हेमायै दुहित्रेण वितीर्णं मेरुसावर्णिदुहित्रा स्वयं प्रभया शतावनं वनोद्देशं अविशन् । ततः कृतातिथ्यायाः स्वयं प्रभायाः प्रभावेण बिलादुत्तीर्णानां समयातिपातेन पतिष्यति सुग्रीवदण्ड इति विकृतिमुपेत्य सङ्कतमनोग-

हेनाङ्गदेन पवनतनयवचनप्रत्ययप्रत्ययानीत प्रकृतिना सह प्रायोपवेशमुपेयुषां प्लवङ्गपुङ्गवानां परिदेवन कथा-प्रसङ्गेन जटायुषो निधनं निशम्य विन्ध्यरन्ध्राद्विहित सम्पातः सम्पातिर्नामगृध्रराजस्तानेव मवादीत् ।

कीदृग्य मत्वयवलेऽप्यभिधाय पापं
वक्षे जटायुषि मम अवसो दहन्तः ।
तस्मात् पुरा किरणदाधितपक्ष युष्मं
तिग्मांशुमुष्णावचसा शिशिरीकुरुध्वे ॥ ३९ ॥

ततस्तैः प्रख्यापितवृत्तान्तः सम्पातिः प्रोषितायुषि जटायुषि निवापाञ्जलिं निहत्य पुरा कदाचिद्दामिषान्वेषणाय प्रेषितेन निजसुतेन सुपार्श्वनाम्ना समाम्नातं महेन्द्रमहीध्र-रन्ध्रनिर्गत दशवदननीयमान जानकीपरिदेवनं जानानः सुलक्षणः पुनरेवमवोचत् । अलङ्कातर्येण लङ्काभिधानां यातुधान राजधानीं अधिवसति सीता दशवदननीता तत्र गच्छन्तु भवन्तः ।

किञ्च ।

दिवाकरप्लोषभवां समाप्तिं निशाकरो नाम मुनिर्निरस्यन् ।
जगाद वः कार्यमहार्यधैर्याः क्षणेन तां द्रक्ष्यथ राजपत्नीम् ॥ ४० ॥
इतिवृत्तान्तं कृतसौहृदं तं सम्पातिमापृच्छ्यपरावरज्ञम् ।
प्रवृद्धहर्षाः प्रथितप्रभावाः प्रतस्थिरे वानरयूथनाथाः ॥ ४१ ॥

पश्यामः प्रमदमुपेयुषां कपीनां
पान्थानां दशमुखमार्गमार्गणाय ।
पाथेयीकृतकपिराजशासनानां
पाथोधिर्नयनपथातिथिर्बभूव ॥ ४२ ॥

स्मृत्वामपुत्वारिमिलीमुखानां
कृत्वा गणस्तत्र वलीमुखानाम् ।
अपामपारस्य निवेश पश्यन्-
नवाङ्मुखो वक्त्रमवाङ्मुखोऽभूत् ॥ ४३ ॥

तदनु वानरसेना सेनामवाप्यमाणकातर्यामित्यमक-
थयदङ्गदः ।

किमिति भजथ मौनं वानरा ! मानहीनाः
सगररचितकूपोल्लङ्घने कुण्ठिताशाः ।
प्रकलयभव लेशं दुःशमं वाडवाग्ने-
रनवधिमयशोऽब्धिं किं समर्थास्तरीतुम् ॥ ४४ ॥

ततः पारावारपारीणतायामात्मशक्तेरियत्तां प्रत्येकं
कथयत्सु यूथपेषु निर्दिश्याञ्जनेयं प्रभञ्जनसम्भवं जाम्बवा-
नभिहितवान् ।

हे वीरा यूथनाथाः ! परिणतिपरुषः कोऽयमासीद्विषादः ।
कस्मादस्माकमेतज्जलनिधितरणे शक्तिरेतावतीति ।
स्मृत्वा राज्ञः प्रतिज्ञामयमनिलसुतो लङ्घनायोन्मुखश्चे-
द्देहः प्रादुर्भवेत् किं कथयत पयसामास्पदे गोष्पदे वा ॥४५॥

उदपतदुपभोक्तुं मण्डलं चण्डभानोः
परिणतफलबुध्या बालभावेऽपि सोऽयम् ।
तदनुकुलिशपातस्तुल्यगण्डाय तस्मै
वरमदिशददमेयं वायुदत्से विधाता ॥ ४६ ॥

इत्थं जाम्बवतापरावरविदा सम्भुत्थितप्राभवः
कृत्वा वृद्धिमुपेयुषा स्ववपुषा त्रैविक्रमं प्रक्रमम् ।

आरुह्याद्रितटं यथोचितमसौ सम्मान्य सेनाधिपान्
आसन्नानथ सन्ननाह तरितुं वारां निधिं मारुतिः ॥४७॥

इति श्रीविदर्भराजविरचिते चम्पूरामायणे
किष्किन्धाकाण्डः समाप्तः ।

---

## अथ सुन्दरकाण्डः ।

ततो हनूमान् दशकण्ठनीतां सीतां विचेतुं पथि चारणानाम्
महेन्द्रशैलस्य खगेन्द्रवेगः प्रस्थादुदस्थात्प्रथमानमानः ॥१॥

तदानीमुदन्वदुल्लङ्घनदृढतरनिहितचरणनिष्पीड़नं सोढुमक्षमः क्ष्माभृदेषनिःशेषनिःसरन्निर्झरौघतया निरन्तरनिष्पतद्बाष्पपूर इव इतस्ततो विततजीमूतवृन्दस्यन्दतया परिस्रवच्छिथिलधम्मिल्ल इव सन्त्रस्यमान कुञ्जरयूथतया सञ्जातव्यथरिव ससाध्वसतया धावमान हरिणीगणचरणकोटिपाटनोद्भूतधातुधूलिपटलितविकटकटकतया चरितशोणित इव तत्क्षणप्रबुद्धकण्ठीरवकण्ठरवमुखरितकन्दरतया कृताक्रन्द इव परिसरगह्वरनिविरीसनिःसृतसरीसृपतया निर्गलितान्त्रमाल इव घूर्णमानतरुविटपकोटिताड़ितजलदवृन्दस्यन्दितशीकरनिकरकोरकिताकारतया समुपजातस्वेद इव स्फुटिततटोपलपतनदलितकीचकसुषिरसंमूर्च्छत्पवनफुत्कारपरिपूरितगगनतया प्रवर्द्धमानोर्द्धश्वास इव वचसामविषयं दौस्थ्यं अभजत ।

कृत्वा मारुति लङ्घनोत्थितरयात्तत्सानुयात्रां ततः
पश्चादात्पततां महेन्द्रगहनश्रेणीरुहाणामृतिः ।

मध्ये वारिनिधिप्रकाशितशिखासेतोः क्षते भाविनः
सूत्रन्यासनिखातशङ्कुनिवहभ्रान्तिं पयोधौ दधौ ॥ २ ॥

पक्षाभिघातरयरेचितवीचिमालः
पाथोनिधेः पवननन्दनविश्रमाय।
उत्तुङ्गशृङ्गकुलकीलितनाकलोको
मैनाकभूभृदुदजृम्भत सम्भ्रमेण ॥ ३ ॥

तत्र यात्रा प्रत्यूहः प्रत्युद्गत इति वचसा तमधःपातयित्वा प्रयातमेनं सान्त्वयन् हिरण्यनाभो बभाषे।

सागरेण कृतज्ञेन तवाध्वश्रमशान्तये।
मारुते प्रेरितोऽस्म्यत्र सौम्य! विश्रम्य गम्यताम् ॥ ४ ॥
तव पित्रा परित्रातः पूर्वं पर्वतभेदिनः।
तस्मान्नास्ति विपक्षोऽत्र सपक्ष इति मां भज ॥ ५ ॥

एवं प्रार्थयमानमेनं संमान्य कार्यगत्या गते सति हनूमति।
अवलोक्य हिरण्यनाभमब्धौ वलमानं बलमानमाथिवज्रः।
अतमन्युरपेतमन्युरासीत् पवमानात्मजसेवनादमुष्मिन् ॥६॥

तदनु यथा पुरं लङ्कापुरं प्रतिधावतो हनूमतः सरणिमरुणदरुणसारथेः पदवीं विरुन्ध्यदिव वदनं व्यादाय विरसनजननीरंहसा सुरसा।

उज्जृम्भितस्य तरसा सुरसां विजेतुं
पादौ पयोधिकलितौ पवमानसूनोः।
तस्योत्तमाङ्गमभवद्गगनस्रवन्ती
वीचिचयस्खलितशीकरमालभारि ॥ ७ ॥

तनुं तनकृत्य तदा हनूमान् कृत्वावगाहं जठरे तदीये।

ततो विनिष्क्रम्य स चक्रपाणेऽस्त्रिविक्रमस्य क्रममेव चक्रे ॥८॥
भूयोऽपि सोऽयं रघुनाथदूतश्चिच्छेद गच्छन्नखरैः खराग्रैः ।
नृसिंहरंहाः पथि सिंहिकाङ्गं छायानिरोधादुपपन्नमन्युः ॥९॥

तदनु पारावारस्य पारे लम्बमानशिखरिणि लम्बमाणे तनुर्लङ्कापुरद्वारमासाद्य नितान्तचिन्तातन्तुसन्दानितान्तःकरणोऽभूत् । वानरसेना कथन्तरेदिममन्तरायं वितन्वन्तमुदन्वन्तन्तरतु नाम । कथमुपयातु यातुधानराजधानीमिमां सर्वथा वितथमनोरथो दाशरथिर्मौर्वीकृतार्णवलङ्घनः केवलमहमभवम् । जीवति वा नवेति न जानामि जानकीमिति । ततस्तत्रभवतीं सीतामवजिगमिषुराञ्जनेयः प्रच्छन्नसञ्चारहेतोरस्तमयं गभस्तिमालिनः केवलमभिललाष । तदनु ज्ञातमस्य निक्षेपचापस्य प्रत्यासीदति प्रयोजनवेलेति प्रचेतसे कथयितुमिव प्रतीचीं दिशं प्रविशति भगवति भास्वति । गगनतलमिदमपरमहीधरकटककान्तारसमुद्भवदावपावकशिखाश्रेणिभिः किमिह शोणितम् । अथ वा समीप समापतत्पतङ्गरश्मि दृढतरवेष्टननिष्ठ्यूतानलतटतपनोपलजालसमुल्लसज्ज्वालापटलैः किमापाटलम् । आहोस्विदागताय मित्राय महार्घमर्घ्यं प्रदातुं प्रमुदितचेतसा प्रचेतसा तूर्णमर्णवोद्गीर्यमाणमाणिक्यकिरणैः किमरुणितम् । आहोस्वित्तारापथतरङ्गिणी सलिलमपि ग्रसितुमुज्जृम्भितस्य चरमसागरौर्वाग्नेरर्चिः पुञ्जेन किमिह रञ्जितमिति । सकल जनस्य सन्देहसन्दोहं सन्दधाने सन्ध्यारागे समुदञ्चिते सरसीरुहश्रेणिषु पत्रपुटकपाटपिधानासु प्रतिकुमुदवनं मकरन्दभिक्षामटत्सु मधुव्रत-

द्विजेषु विकचकुवलयकलिकाकषणकषायेषु साय वायुषु ततः इतः सञ्चरत्सु तिमिरेषु कालागरुधूमस्तोमश्यामलितेषु दिक्पालपुरगोपुरव्यूहेषु प्रतिकमलाकरं प्रेङ्खितविश्लेषवेदना पूर्वरङ्गे रथाङ्गविहङ्गानां दीनक्रेङ्कारे नक्षत्रमालालङ्कृते गगनमतङ्गजे।

आविर्बभूव पूर्व्वाद्रेः शृङ्गे शृङ्गारजीवितम्।
तमस्तमालकान्तारकुठारः शशलाञ्छनः॥ १०॥

तत्कारास्तमसा रुद्धा रेजिरे गगनाजिरे।
शैवालचयसंच्छन्नाः सरसीव विसाङ्कुराः॥ ११॥

तस्मिन् प्रदोषसमये सहसा हनूमान्
कीर्त्तिच्छटा जवनिकामपनीय शत्रोः।
आविर्बभूव सुमनः परितोषणाय
लङ्काप्रवेशनवनाटकसूत्रधारः॥ १२॥

तत्काले लङ्काधिदेवतामात्मना सह विग्रहं विधातुं गृहीतयुवति विग्रहां मार्गस्यार्गलीभूय भूयसा तर्जयन्तीं निर्जित्यतया वानररचितावज्ञोपघ्नं निजविलयं सरसिजासनशासनादावेदयन्त्या विहितानुमतिर्मारुतिर्लङ्कायामविकलमेव मैथिलीं विचिन्वन्नैऋतिचक्रवर्त्तिनः प्रासादमाससाद। तत्र।

एषा राक्षससार्वभौमनगरीरत्नस्य मूर्द्धन्विता
तस्येदं सदनं विमानशिखरैर्बिभ्राणमभ्रावलिम्।
एतत्पुष्पकमाहृतं धनपतेरित्यादरान् मारुते
स्तत्रादर्शयदिन्दुदीपकिरणप्रद्योतिता शा निशा॥ १३॥

अपि च।

आदित्यः कृतकृत्य एष भविता सीतापतेरीदृशं
साहाय्यं विरचय्य कीर्त्तिममितामादित्सुना सूनुना।
इत्यालोच्य तदा किल स्वयमपि ख्यातिं ग्रहीतुं परां
लङ्कायां रघुनाथ दूतसरणौ चन्द्रेण दीपायितम्॥ १४॥

एवमेव पर्य्यटन् स्वप्नसुन्दरी सौन्दर्य्यमुद्रां निद्रयाप्यति शय्य शय्यागृहे कृतसंवेशं वेश युवती परिवृतमवरोध वधूजनमप्यनिरोधेन निरीक्ष्य तत्र वितथमनोरथो मारुतिर्विरचितबहुविधचिन्ताप्रकारः प्रासादादवप्लुतः सन् अशोकवनिकायामपि मैथिलीमन्वेष्टुमभीष्टदेवता प्रणाममतनुत।

असौ जनकनन्दिनीं तत इतो विचिन्वन् चणा-
दशोकवनिकामगाद् अपगतान्य मार्गस्रमः।
परामभिलषन् गतिं शमधनो यथा निर्मम-
स्त्रयीमखिलकिल्बिषप्रशमनैक दिव्यौषधिम्॥ १५॥

ततस्तस्यां नागतालहिन्तालतमालकृतमालसरलवकुलतिलकामलककुटजनिकुचकेतककङ्कोललवङ्गविकङ्कतकदम्बको दुम्बरकपित्थाश्वत्थकुरबकमरुबककुन्दतिन्दुकचन्दनस्यन्दनचम्पकचाम्पेयपनसवेतसपलाशपाटलाप्रियालप्रायैरनेकैरनोकहनिवहैः परिवृतां परिभ्रमनभ्रङ्कषविटपनिविडितगगनप्रपञ्चां काञ्चनकाञ्चनमयीं शिंशपामारुरोह।

तत्र तत्पत्रसंछन्नगात्रः पुत्रो नभस्वतः।
न्यग्रोधदलसंलीनजनार्दन दशां दधौ॥ १६॥

मलीमूतवनादिवस्तुहि वने स्वच्छेन संस्थापिता

मालां देवकुलादिवामिषधिया चितां श्मशाने शुना ।
देवीमाश्रमतस्तथा स्वभवनं नक्तं चरेण च्छला-
दानीतामपनीतवेषरचनामालोकयश्मारुतिः ॥ १७ ॥

पुनरयमेवं चिन्तां ततान ।

एनां विना रघुपतिः परिगृह्य धैर्यं
स प्राण एव वसतीति विचित्रमेतत् ।
ज्योत्स्नां विनापि निवसन्निशि शीतभानु-
च्छायां विनापि निवसेद्दिवसेश्वरोऽपि ॥ १८ ॥

एवं चिन्तयता हनूमता नीते निशीथसमये निशीथिनीनाथे चरमगिरिशिखरोपकण्ठसेवासमुत्कण्ठमाने दशकण्ठस्तु निद्राशेषेण स्मरप्रहारेण च कलुषीकृताक्षः सरसहरिचन्दनचर्चया जानकीदर्शनेच्छया च प्रकटितरागः वैकक्षमालया मुकुटतटरत्नप्रभया च तिरस्कृतनक्षत्रमालः शनैःशनैरविशदशोकवनिकाम् ।

रजनिचरमभागे वारसीमन्तिनीनां
करतलकलिताभिर्दीपिकामार्जनीभिः
दिशि दिशि परिमृष्टं यत्तमस्तत्समस्तं
हृदयमवजगाहे केवलं रावणस्य ॥ १९ ॥

सोऽयं मदान्धहृदयो रघुवीरपत्नीं
सीमन्तिनीतिहतनीतिरवाप पापः ।
आमूलपल्लवितकोमलसल्लकीति
वैतानपावकशिखामिव वारणेन्द्रः ॥ २० ॥

एतद्दर्शनवेपमानतनुलता मैथिली कापुरुषविषयपरुषवचनपारम्पर्येण विदीर्यमाणहृदयाहृदयदर्शितशौर्य-

प्रत्ययादमुमेव तृणाय मत्वा तृणमन्तरतः कृत्वा स्थिता पर्य्यभाषत। अयि भोः सकलसमाचारप्रतिष्ठानिष्ठः परमेष्ठी ननु कुलगुरुर्भवतः परकलत्रगात्रनेत्रप्रसक्तिरप्यनिरपत्रपां जनयति गोत्रजातानाम्। भूयोऽपि पञ्चवटीपरिसरममुञ्चन्तं प्रभञ्जन इवानुकूलः कूलोपकण्ठपरिभ्रष्टां नावमिव यदि नयेथाः।

तवापि दयते नियतं महीयो जीवितेशः साक्षाज्जीवितेशोऽपि त्वयि दयालुर्भवेद्दाशरथे रुजे यस्य मैत्र्याः पात्रमपि भवितासि। किन्तु। खरप्रमुखनिशाचरबलमथनसमयसुचिरलग्नसान्द्रवसापङ्कपङ्किलितमुखमार्य्यपुत्रस्य शिलीमुखं भवन्तमन्तरेण कः श्रद्दधीत निजहृदयगलितरुधिरधारया प्रक्षालयितुम्। अथवा जनस्थानसमरादारभ्यसमराभावावग्रहतृषितानां सौमित्रिपत्रिचातकानां त्वदङ्गगलितशोणिताम्बुधारणान्तवापनयपवनतश्चेत् कः समर्थो निवारयितुम्।

अथ निशिचरनाथं पञ्चबाणावभिन्नं
नहि जनकसुतायाः प्रापदेकापि वाणी।
जनमुपनतमृत्युं पञ्चवक्त्राहिदष्टं
विशति हृतविषाधेरौषधेः किन्नु शक्तिः॥ २१॥

एवं जनकदुहितुरवधीरणाभणितिमाकर्ण्य कोपपराङ्मुखो दशमुखस्तामभितो निवसन्तीरारक्षिकाराक्षसीराहूयभवत्यश्चतुर्भिरप्युपायैरेनां ममावश्यवशां कुरुध्वमियमननुकूलाचेदि मां हताशां प्रातराशाय महानसं नयतेत्यादिश्य निशान्ते प्रत्यासन्ने निशान्तमेव विवेश। तदनु

भीषणवीक्षणक्षणदाचरीणां वाक्यदोषाभिषणान् मुकुलितहृदयपुण्डरीका पुण्डरीकयूथपरिवृतसारङ्गाङ्गनाभङ्गीमङ्गीकुर्व्वाणा गीर्वाणतरुणीव ग्रापवलादसुन्धरां प्रपन्ना जनकनन्दिनी चिन्तामेवमकरोत् ।

नूनं विदितवृत्तान्ते जटायुषि गतायुषि ।
मामिहावस्थितामार्य्यपुत्रः किन्नाववुध्यते ॥ २२ ॥

आहोस्वित् क्रव्यादमायया विपर्य्यस्तप्रकृतेः काकुत्स्थ किमुनास्मास जायते । अथवा ।

न केवलं मामहरद्दुरात्मा कृपाञ्च रामस्य निसर्गसिद्धाम् ।
इदं न चेत् संश्रितवत्सलः किं भवेत्सतूष्णीं जगदेकवीरः ॥२३॥

इत्थं विलप्य रघुपुङ्गवं चिन्तयन्ती कच्छ्रात् मूर्च्छामगमत् ।

निशाचरीस्तां निरवद्यशीलां निर्भर्त्सयन्तीर्निभृतं निवार्य ।
अस्वप्नलोकोत्सवमात्मदृष्टं दुःस्वप्नमेकं त्रिजटा जगाद ॥२४॥

किञ्च ।

उपप्लवस्यास्य परीक्षभावादुपेत्य पृथ्वीं सुचिरं लुठन्त्याः ।
न सुन्दरस्त्रीमुखकर्षितायाः सीतालतायास्त्रिजटाजटाभूत् २५

तदनन्तरमात्मत्यागाय स्पृहयन्त्यां मैथिल्यां मारुतिरियमनुपेक्षणीया तपस्विनी नीतिममुञ्चतीति । चिन्तां परिगृह्य नेदीयानस्या बभूव । ततः ।

देव्या दशाननवचोमयवज्रदीर्ण
कर्णान्तरव्रणविरोपणभेषजानि ।
विस्रम्भणार्थमयमन्वयसङ्गतानि
रामाभिकीर्तनमधूनि शनैर्व्यषिञ्चत् ॥ २६ ॥

तदनन्तरं समन्तात् प्रसारितनयना जनकतनया तस्यां शाखायां शाखामृगमुद्वीक्ष्य चकितहृदया दुःस्वप्नबुध्या सलक्ष्मणाय भर्त्रे भद्रमाशंसमाना जनमिमं दुरापस्वापं स्वप्नः कथमाप्नुयादिति विचिन्तयमाना माशासमायात-नैरृतपतिबुध्या तस्मात् मारुतपुत्रात्त्रास । सोऽपि समवतीर्य्य वचनवैचित्र्याज्जनकपुत्रीं प्रत्यापयन् आञ्जनेयः कृताञ्जलिर्व्यजिज्ञपत् ।

कल्याणि ! तीव्रवेगेन त्वद्वियोगेन ताम्यतः ।

राघवेन्द्रस्य दूतं मामन्यथा मास्म मन्यथाः ॥ २७ ॥

त्वया सह प्रस्थितचित्तवृत्तिर्विभावरीकोकसमानधर्म्मा ।

वचोऽब्रवीत् मैथिलि ! मन्मुखेन त्वां कौशलं कोशलराजपुत्रः २८

अपिच । शिरसा तव सौमित्रिरकरोदभिवादनम् ।

अपृच्छत् सोऽपि भद्रं त्वामधिपस्य वनौकसाम् ॥ २९ ॥

एवमभिहितया तया सम्भूतविस्रम्भया भयानपेतया तावदनुयुक्तः पवनतनयो वालिमरणकारणं सुग्रीवस्य सख्यमाख्याय प्राचेतसचेत इव सन्तत सन्निहित राम-नामकमङ्गुलीयकमस्यै प्रायच्छत् ।

सौख्यावहस्य पवनात्मजदीयमान
रामाङ्गुलीयकविलोकनवासरस्य ।
सत्यं कलाशततमीमपि नैव भेजे
पाणिग्रहोत्सवदिनं जनकात्मजायाः ॥ ३० ॥

ततस्तं जानकी निःसीमहर्षा बभाषे । महाभाग ! सर्वथास्य दुरात्मनः प्रत्यासीदति मृत्युस्तथैव मनलाभिधा-नया विभीषणदुहित्रा मह्यं च स्वमात्रा प्रेषितया भाषितम् ।

अयमप्यनार्यशीलस्तुरीयमुपायमन्तरेण ममार्यपुत्रस्य न समर्पयिष्यति। नियतमहमपि मासादूर्ध्वं न शक्नुयां प्राणान् धारयितुमिति। एतदाकर्ण्य मारुतिर्महानुभावे! माभैषीः। भवन्तीं वहन्नेव तूर्णमुल्लङ्घितसागरो राघवचरणसरसिजमुपयास्यामीत्येवं मां समर्थं समर्थयेथा इत्यभिधाय।

महामहीध्र सध्रीचीं सोऽयं वृद्धिमुपेयिवान्।
यथानूनमपां राशिः कुल्या तुल्यां विभेद्यताम्॥ २१॥

अथ तमुवाच सा जनकसुता मुदिता
किमु तव दुष्करं चरणलङ्घितवारिधेः।
अपितु मया सह प्लवगपुङ्गव! यास्यसि चे
द्दियमनपायिनी परिणमेद्भवतः पदवी॥ २२॥

अन्यच्च। पातिव्रत्यहुताशनेन यदि तं कुर्यामहं भस्मसात्
सत्यं दाशरथेः शरस्य न भवेदालोचिता पारणा।
किं चैतस्य यशोनिशापतिरपि प्रम्लानकान्तिर्भवेत्
तस्माच्छासितरावणे रघुपतौ यात्रा मम श्रेयसे॥ २३॥

एवं व्याहृतः पवनसुतः सीतां पुनरभाषत।

मायामृगेण तव मैथिलि! वञ्चितायाः
शाखामृगेण पुनरागतिरित्ययुक्तम्।
एषा कथापि भुवने विदिता यदि स्यात्
का नाम राम धनुषः प्रथिता प्रशस्तिः॥ २४॥

किं बहुना।

इत्येतदेवं चिन्तितं यदहं राघवगृहिण्यास्तदेवनिश्चितम्। यत्सदृशमीदृशस्य समाचारस्य तदेव प्रका-

श्रितं यद्गुणं रावणापराधप्रतिक्रियायास्तदेवानुमोदितं यदनुकूलं कुलवधूशीलस्य तदेव कथितं यदुचितं चत्रियाणां वाणीक्रमस्येति बहुशः प्रशस्य सर्वथा रामलक्ष्मणौ लङ्कामिमां प्राप्ताविति जानकी जानीहि जनमिममनुजानीहि प्रस्थातुम्। किञ्च। काकुत्स्थेन विदितपूर्वं किमप्यभिज्ञानं दीयतामिति। सा तु दीर्घं निश्वस्य निश्चित्य पुरा खलु चित्रकूटतटवने तरुणतरतररमणीयतया मन्दीकृतानन्दनवैभवे रघुनन्दनोपधानीकृतोत्सङ्गाया मम पयोधरपरिसरे खरतरनखराग्रविरचितविदारणं धाराधरश्यामानं काकं रघुपतिरवालोकयत्।

कुशरूपकुशेशयः सनास्त्रं
विजही वासविवायसे स वीरः।
अथ तत्कृतपयाहृताचिमात्र-
श्चिरजीवी सदधौ यथार्थसंज्ञाम्॥ २८ ॥

सैषापरिचितकथाश्मरणाहितगुणदुर्दशा केशपिनद्धमपरमिदमभिज्ञानमुन्मुच्य।

चूडामणिं कपिवरस्य ददौ दशास्य
सन्त्रासपूजितमहाग्निशिखं कृशाङ्गी।
आदाय तं प्रणतिपूर्वमसौ प्रतस्थे
साणिक्य गर्भवदनोरगतुल्यबाहुः॥ २६ ॥

ततः कृतकृत्य एव निर्गत्य निजागमनं निशाचरपतेः प्रकटयितुमशोकवनिकां प्रबभञ्ज प्रभञ्जनात्मजः।

स्वकृत्यैः शाखानामवनतिमतीव प्रकटयन्
अमार्गेण भ्राम्यन् परिकलितभङ्गः सुमनसाम्।

द्विजानां सन्त्रासं श्रुतिमधुरवाचां विरचयन्

अयं लोकोद्यामे दशवदनलीलामतनुत ॥ ३७ ॥

तदनु सरभसमारक्षिकरक्षोगणनिवेदितप्रमदवनकद-नकुपितदशवदनप्रेषितान् पितृपतिकिङ्करभयङ्करान् प्रहस्तपुत्रेण जम्बुमालिना सह निहत्य चैत्यतोरणमुपागतवति हनूमति पुनरपि निशमितामित निशिचरगणमारणो रावणः सचिवान् पञ्च पञ्चाननपराक्रमान् प्रहस्तप्रमुखान् बलीमुखं जीवग्राहं गृह्णीध्वमिति प्राहिणोत्। तत्र तानपि पञ्चतां नीत्वा तोरणपरिघेण मुहुर्मुहुर्दाशरथिदासोऽहमित्यात्मानमुद्घोषयन्तं हनुमन्तं नियन्तुं निखिल-रक्षोगणमध्यक्षमक्षकुमारमाक्षिपत्।

वक्षः सङ्घट्टचूर्णीकृतकनकमहाभित्तिचैत्योत्थधूल्या

नक्षत्राणामकाले सरणिमवणयन् वीरलक्ष्म्या समेतः।

रक्षः शूराग्र्यधारान् क्षितितलफलके क्षेपणीयान्

क्षणमानक्षक्रीडां विधातुं दशमुखनगरीचत्वरे तत्वरेऽसौ॥३८॥

तत्क्षणं क्षणदाचराणामनिमिषितामेव निष्पादित-तदङ्गनिष्पेषकत्यक्तचैत्यप्रसादमुत्पाटितस्तम्भजातं जातवेदसा दग्ध्वा भूयोऽप्युपाश्रिततोरणः समीरणसुतो बभूव। एनमपि वृत्तान्तं श्रुत्वा कुपितस्य पिशिताशनपतेर्युगपदेव निपेतुः पुत्रे सुत्रामजिति समतिष्ठेतोर्विंशतिदृष्टयः।

अनिमिषभुवने वा व्योम्नि वा भूतले वा

समरमुपगतं त्वां वीक्षितुं कः समर्थः।

इति स्तुतिवचनेन श्लाघयन्मेघनादं

प्लवगमिहनयेति प्राहिणोद्राक्षसेन्द्रः॥ ३९ ॥

नेतुं शीकरसं निशाचरपतेर्हनूश्च भूरक्षणां
तस्यान्तःपुरयोषितां रचयितुं मानं विना रोदनम्।
सूर्य्याचन्द्रमसोः प्रवेशविकलां लङ्कापुरीमन्विता
शुद्धिं कर्तुमनुष्यवासवजिता जातोरणश्चोरके ॥ ४० ॥
संग्रामदुर्दिने तस्मिन् जहर्ष शरवर्षिणि।
बर्हीव मेघनादेन मेघनादेन मारुतिः ॥ ४१ ॥

तदनु यातुधानप्रबलप्रधाननिधनजन्मा विविधायुधवैतथ्यं विमृश्य विजयश्रीसगन्धं गन्धवाहनन्दनं चतुराननास्त्रेण बबन्ध दशकन्धरात्मजः। तेन दिव्यास्त्रेण विवशशरीरमेनं पिशिताशनाः शोषवल्कलैर्बबन्धुः।

स मारुतेर्नैर्ऋत पाशजन्मा बन्धोऽभवद्बन्धनमोक्षहेतुः।
पुरा पुलस्त्यान्वयपांसुलेन बन्दीकृतानां सुरसुन्दरीणाम्॥४२॥

तदनन्तरमितरबन्धनासहतया निजाङ्गुलस्य दिव्यास्त्रस्य प्रभावं विभावयन् विभावरीचरपतितनूजः पवनतनयं निजपितृसमीपमुपनिनाय।

सोऽयं ददर्श दशकन्धरमन्धकारि
लीलाद्रितोलनपरीक्षितबाहुशौर्य्यम्।
बन्दीकृतेन्द्रपुरवारवधूकराग्र-
व्याधूतचामरमरुच्चलितोत्तरीयम् ॥ ४३ ॥
आपाटलाधरपुटान्तविराजमान-
दंष्ट्रामहःप्रसरशारशरीरकान्तिम्।
सन्ध्याम्बुदान्तरितमध्यसुधामयूख-
रेखाभिराममिव वासवनीलशैलम् ॥ ४४ ॥

संग्रामकेलिपरिघट्टनमग्नभग्न
दिग्दन्तदन्तक्षतमुद्रभुजान्तरालम् ।
छायात्मना प्रतितरङ्गविराजमान-
शीतांशुमण्डलसनाथमिवाम्बुराशिम् ॥ ४५ ॥
निश्रेयसः प्रणयिनीं पदवीं निरोद्धुं
त्रैलोक्यपापपरिपाकमिवात्तरूपम् ।
सूर्येन्दुपावकमहांसि तपोबलेन
जित्वा यथेष्टमभिषिक्तमिवान्धकारम् ॥ ४६ ॥
सोऽपि प्लवङ्गममवेक्ष्य समीरपुत्रं
चिन्तीयमानहृदयः पिशिताशनेन्द्रः ।
कैलासशैलचलनागसि शापदायी
नन्दीश्वरः स्वयमुपागत इत्यमंस्त ॥ ४७ ॥

ततः प्रहस्तेन विहितविविधानुयोगः प्रत्यभाषत रावणं मारुतिः । अयमहमक्षामधिपतिकुलतिलकस्य सत्यसन्धस्य पितृनियोगसमुपनतवनवासविरतस्य शूर्पणखारातिवाधितशूर्पणखाप्राप्तवैरूप्यस्य कुप्यत्खरप्रमुखनिशिचरतूलपलालजालकल्पानलकल्पशिलीमुखस्य कपटहरिणहननसमयसमुषितदारान्वेषणसञ्जातसुग्रीवसख्यसमुत्खातवालिकण्टकस्य दुर्वृत्तक्षत्रवंशवनपवनसारथेस्तपोनिधेर्जामदग्न्यस्य भुजबलावलेपलोपहेतोः श्रीमतो दाशरथेर्दूतोऽहं सीतामार्गमार्गणाय दिशि दिशि तपनतनयप्रेषितानां वानराणां एकतमः समुद्रलङ्घनजङ्घालस्तव नगरप्रमदावनसीम्नि रघुवरधर्मदारान् प्रणम्य प्रतिष्ठासुर्मदीयमागमनं प्रकाशयितुं मथिता शोकवनिकानोकह-

निवहस्त्वद्दर्शनकुतूहलेन केवलमनुभूतनैकट्‍तनूलातनुसच-
क्षुनस्तव परिसरमुपासरम् ।

भागाकलोकपरिकीर्तितसच्चरित्र-
मत्रोपकृत्य रघुवंशपतेः कलत्रम् ।
त्रेतामवेदिजनितं पवमानबन्धु
वस्त्रेण बद्धमविनीतकथं यतेथाः ॥ ४८ ॥

प्रेङ्खन्ती पिशिताशया रणमुखे सौमित्रिपत्रिच्युतं
त्वद्गात्रं परितः पतत्रिपरिषच्छन्नच्छविं मागमत् ।
द्राक् पौलस्त्यपुलस्त्यवंशविलये सम्भाविते त्वत्कृते
कान्तानां नयनान्तवान्तसलिलं मा भूत्रिवापोदकम् ॥ ४८ ॥

यद्यादरोऽपि परदारपरोग्रहे त्व-
मिक्ष्वाकुनायककलत्रमनार्थ्यमागाः ।
वाताशनोऽहमिति किं विनतासुतस्य
श्वासानिलाय भुजगः स्पृहयालुतालुः ॥ ४९ ॥

बाहुचन्दननिषङ्गकोटरात्रिर्गतो रघुपतेः शरोरगः ।
प्राणवायुमविनीततावकं कालयापनमपास्य पास्यति ॥५०॥

किं बहुना ।

मायामृगे समरनाटकसूत्रधारे
शाखामृगे च भवतः प्रतिकूलवाते ।
दृष्टोद्यमस्य रघुनायकसायकस्य
मुक्ता प्रणामकवचं कवचं किमन्यत् ॥ ५१ ॥

एतन्निशम्य कुपितः पिशिताशनेन्द्रः
प्राणानमुष्य हरतेति भटानवादीत् ।
भाजन्मसिद्धमतिरत्र विभीषणस्तं

दूती न वध्य इति शास्त्रगिरा ररोध ॥ ५२ ॥

रावणोऽपि विभीषणभाषणमङ्गीकृत्य प्लवङ्गमानामङ्गेषु लाङ्गूलमेव वरम्। तदेव कार्पासवाससा संवीतं वीतिहोत्रसात्कृत्य चत्वरे चत्वरे दोषानुद्घोष्य सप्रहारं नगरं परितः सञ्चारयतेति राक्षसानादिदेश। तेषु तथा कुर्वाणेषु।

निर्णयाविषयमस्य बालतः कर्णिकारनिकुरम्बकर्बुरः।
निर्निमेषगणभाग्यसञ्चयाद्दुर्निमेष भगवानुषर्बुधः ॥ ५३ ॥

एतद्वृत्तान्तमारक्षिकराक्षसीगणेन गर्वोद्दीर्णं वर्णितमाकर्ण्य दूयमानमानसा जानकी हुताशनमुपस्थाय हनूमतः शीतो भवेति प्राञ्जलिः प्रार्थयत।

घोरस्य राघवकलत्रतपोमयाग्ने-
र्भूभूवमिन्धनमहं क्षणमित्यवेत्य।
शैत्यं वितत्य दहनः पवमानसूनो-
र्बालाग्रसीम्नि मणिदीप इवावतस्थे ॥ ५४ ॥

तदनु पवनतनयोऽपि पुरमिदं न खलु सुव्यक्तं नक्तमालोकयम्। तस्मादनलसाक्षिकमेव पुरमखिलमालोकयामीति यामिनीचरगणं परिचिततोरणपरिघेन जघान।

सीताभिधानकमलां प्रभवे प्रदातुं
लङ्कार्णवं क्षुभितसैन्यतरङ्गभीमम्।
वेधा ममन्थ किल रज्जुभुजङ्गराज-
भोगावृतेन पवनात्मजमन्दरेण ॥ ५५ ॥

अथ लङ्कायां दह्यमानायाम्।

रक्षस्त्रीवदनारविन्दरजनी विश्वम्भरावर्द्धिनी

वर्षारम्भदशां दशाननयशः कादम्बकादम्बिनीम्
वैधव्योचितवेषनिश्चितमनोलङ्काबधूटीजटां
वैदेह्यास्त्रिजटासमां समकिरद्धूम्यां हनूमान्दिवि ॥५६॥

अपि च ।

एतद्विक्रमवीक्षणेन जनितामानन्दवाष्पोद्गतिं
रक्षोनाथभयात्पिधातुमनसा विद्याधराणां तदा ।
व्याजव्याहृतये यथा परिणमेद्धूम्या तथा जृम्भते
स्वर्लोकेऽपि कलिन्दशैलतनया कल्लोलशङ्कावहा ॥५७॥

आदौ नीलांशुकश्रीस्तदनु मरकतावद्धनीवीविभूतिः
कस्तूरीपङ्कभङ्गीक्षणमपि विकचेन्दीवरस्रक्प्रबौ ।
पश्चात् स्निग्धाञ्जनाभा जघनकुचतटीकण्ठनेत्रेषु जाता
दिक्कान्तानां तदानीं दशमुखनगरीदाहसम्भूतधूम्या ॥५८॥

हा तात ! हा जननि ! हा सुत ! हा सहाय !
हा पुत्रि ! हा प्रियसखि क्व नु ! हा हतोऽस्मि ! ।
इत्यादि पौरपरिदेवनभारवाग्भि-
रापूरि रावणपुरी शिखिना परीता ॥ ५९ ॥

यैर्वृन्दारकसुन्दरीजनमुखे नीराजनं निर्मितं
निर्मेघे गगनेऽपि यैर्विरचिता सौदामिनीसंहतिः ।
ते दिव्यान्यपि वासराणि न गता निर्वाणमौर्वानल-
ज्वालाडम्बरमम्बुधौ विदधिरे बालानलोद्यल्लणाः ॥ ६० ॥

आदीप्यमानपवनात्मजबालसङ्गात्-
सङ्गारशेषविभवामवलोक्य लङ्काम् ।
व्योम्नि स्थिता निशिचराः स्वगृहाणि ननं
निर्वापयन्त इव नेत्रभवैः पयोभिः ॥ ६१ ॥

चक्रे शक्रजिदाज्ञया रणमुखे यत्कर्म रक्षोगण-
स्तत्कर्तुं चरणादावरचितिभुजा युक्तोऽप्ययुक्तोऽभवत् ।
समाचिक्ष हनूमता परिचितो लङ्कामधाक्षीद्यथा
तत्पित्रा मरुता युतोऽपि न तथा दाहक्रियायां पटुः ॥ ६२ ॥

तस्मिन् हनूमदरणिप्रभवे हुताशे
शुद्धिं विधाय पतिमेव समेतु मैच्छत् ।
लङ्केश्वरेण रणकेलिकुतूहलेन
बाहोर्बलादपहृता सुरराजलक्ष्मीः ॥ ६३ ॥

वाचामिदानीं किमु विस्तरेण लङ्कापुरीं रावणबाहुगुप्ताम् ।
काकुत्स्थदूतोऽयमुपेत्य चक्रे कृतान्तदूतस्य सुखप्रवेशाम् ॥ ६४ ॥

पौलस्त्यपातकिसमागमजायमान-
मेनः पुनान इव वानरयायजूकः ।
निर्वर्तिताखविजयो निजबालवह्नौ
हुत्वा पलाशसमिधः सुगतिर्बभूव ॥ ६५ ॥

लङ्कादाहेऽप्यनार्तां रघुपतिदयितां चारणोक्त्या विदित्वा
सानन्दस्तां प्रणम्य प्रतिगमनविधौ प्राप्य तस्या नियोगम् ।
आरुह्यारिष्टशैलं निधिमपि पयसां स्वैरमुत्तीर्य वेगा-
च्चक्रे गत्वा महेन्द्रं प्लवगबलपतीन् पूर्णकामान् हनूमान् ॥ ६६ ॥

अथ यथार्हं सैन्याधिपान् सम्मान्य मारुतिरेतैरनुयुक्तः स्ववृत्तान्तमखिलमाख्यातवान् । तदनु पवनतनयवचनमुदिता वानरवरूथिनी यूथनाथानुयाता तद्दर्शनजनितमानन्दं दाशरथौ सुग्रीवे च संविभज्येव विवक्षितुम् । अन्तर्मर्मिकया धावन्ती मध्ये सरणिदधिमुखकृता वनं मधुवनं हनूमदनुमत्याभिभूय मधुपानसुखमनुबभूव ।

अथाब्रवीद्गिरिवरतुङ्गमङ्गदं
कृताञ्जलिर्दधिमुख एष रोषवान्।
वलीमुखान् मधुभजने शिलीमुखान्
भवानिमान् झटिति निवारयेदिति॥ ६७॥

अयमप्येनमवोचत।

दशमुखपुरमध्ये वीक्षिता मैथिलीति
श्रवणमधुवितीर्णं येन वीरेण मह्यम्।
दधिमुख यदि सोऽयं भाषते कोनिरुध्यात्
मधु पिबतु यथेष्टं वाहिनी वानराणाम्।

तदनुभयविवेशसमुनतदधिमुखवचनविदितमधुवनकदनपरिभणितजनकदुहितृदर्शनजनितप्रमदभरभरितस्तपनतनयस्तनुविकृतिमतनुत तदभिमुखागमननिमित्तसम्पत्तिम्।

अरुह्याद्रिमथावरुह्य विपिनान्यास्वाद्य नानाफला-
न्यास्फोट्य प्लुतमारचय्य वदनैरापाद्य वाद्यक्रमान्।
आलिङ्ग्य द्रुममक्रमं मदवशादाधूय पुच्छच्छटा-
मारादाविरभूदहं प्रथमिका पौना कपीनां चमूः॥ ६८॥

निद्राक्षयादरुणितेन समीरपुत्रः
सौमित्रिनेत्रयुगलेन निपीयमानः।
चूड़ामणिं करतले कलयन् ववन्दे
पादारविन्दयुगलं भरताग्रजस्य॥ ७०॥

अक्लेशसम्भूतगतागताभ्यां निस्तीर्णविस्तीर्णमहार्णवोऽपि।
आनन्दसिन्धौ पृतनासमक्षमक्षस्य हन्ता नितरां ममज्ज॥७१॥
आनीतचूड़ामणिसन्निधानादाविःप्रमोदेन रघूद्वहेन।
तत्रानुयुक्तः पवमानजन्मा विज्ञापयामास कृतप्रणामः॥७२॥

लङ्कापुरोपवनसीमनि राजपुत्री-
मालोकयं निशिचरीगणबाध्यमानाम्।
केनापि पातकवशेन सुपर्णलोके
बन्दीकृतामिव भुजङ्गमराजकन्याम्॥ ७२॥

देव्यास्त्वदीयान्वयकीर्तनेन त्वन्मुद्रया च व्यपनीय शोकम्।
वार्त्तामभिज्ञानमयीं मया च प्रस्थातुकामः परिपूर्णकामः॥७४॥

ब्रह्मास्त्रविवस्तजयन्तकृत्यां कथामभिज्ञाप्य वने प्रवृत्ताम्।
चिरं धृतस्त्वज्जनकेन्द्रपुत्र्या चूडामणिः प्रेषित एष तुभ्यम्॥७५॥

किं बहुना।

देव तस्याः प्रतिष्ठासूनसूना शोकपालितान्।
मुद्रयित्वा प्रपन्नोऽहं त्वदभिज्ञानमुद्रया॥ ७६॥

इति श्रीविदर्भराजविरचिते चम्पूरामायणे
श्रीमत्सुन्दरकाण्डः समाप्तः।

---

अथ युद्धकाण्डः।

दृष्टे यत्र यदृच्छयापि वचसां देवी पुरो वर्त्तते
सारस्यं महदभ्युदेति सदसि प्रागल्भ्यमुज्जृम्भते।
जायन्ते सकलाः कला अपि नृणां जागर्त्ति कीर्त्तिर्नवा
चेतः खिद्यतु तत्र ईशिकपदाम्भोजे च भोजे मम॥ १॥

भोजेन तेन रचितामपि पूरयिष्यन्
अल्पीयसापि वचसा कृतिमत्युदाराम् ।
न व्रीडितोऽहमधुना नवरत्नहार-
सङ्गेन किं न हृदि धार्य्यत एव तन्तुः ॥ २ ॥

मुद्रामुद्रितजीवितां जनकजां मोहाकुलं राघवं
चूडारत्नविलोकनेन सुचिरं निध्याय निध्याय च ।
प्रारेभे हृदि लक्ष्मणः कलयितुं पौलस्त्यविध्वंसनं
धीरः पूरयितुं कथाञ्च विमलामेकेन काण्डेन सः ॥ ३ ॥

आनन्दमन्थरमनन्तरमाञ्जनेया-
दाकर्ण्य वृत्तिमनघाञ्जनकात्मजायाः ।
दृष्टिर्दशाननवधा पदायमाणा
बाणासने परिदधे प्रभुणा रघूणाम् ॥ ४ ॥

अथ सुग्रीवोऽपि दशग्रीवकुपितराघवावलोकनद्विगुणीकृतरणोत्साहः साहायकमनुपालम्भमम्बुमिव सिन्धुमवधार्य्य धार्य्यमाणधैर्य्यावगाढमतिः । अधिरूढत्रिकूटशिखरां लङ्कामधिगन्तुममन्दकुमुदनलनीलप्रमुखमपि वलीमुखानीकं समनीनयत् ।

वारिदादपि च रामनामतः पूरिता पुनरपाङ्गधारया ।
तत्क्षणं प्रतिचचाल दक्षिणां वाहिनीशमखिलापि वाहिनी॥५॥

ततः क्षणेन समचमच्चलितर्क्षसमुदाये कुमुदामोदकारिणि शरभाधिकप्रसादशीले नीलेन्दीवरानन्दिनि दशाननदिशाक्रमणव्यग्रतेजसि समारूढतारानन्दनलक्ष्मणानुगते सरभसमुदयसानुमन्तमिव हनूमन्तमधिरोहति निशाचरतिमिरहरणनिस्तन्द्रे रामचन्द्रे समन्ततः कन्द-

लितबहुलहरिजालकोलाहलभरितहरिदन्तरो निरन्तरा-
स्कन्दितनिकटकान्तारावलिर्वलीमुखबलमहाम्बुधिः सस-
म्भ्रममुदजृम्भत ।

उत्रासकासरमुदञ्चितपल्लवश्रीं
वित्रस्तहस्तिविसरात्तचमूरयूथम् ।
आलोललोचनतरङ्गकुरङ्गयाव-
मासीदसीमविपिनं कपिसैन्यघोषैः ॥ ६ ॥

सैन्यैस्ततो रघुपतिः सरितां निवेशं
वेशन्तयन्विरलयन्विपिनाम्बराणि ।
आक्रम्य सह्यमपि शैलमसह्यवातं
मन्दानिलैकनिलयं मलयं जगाम ॥ ७ ॥

गत्वा च तमद्रिं सौमित्रिमिदमवादीत् ।

अमी तटसमीपनिर्झरतरङ्गरिङ्खत्पयो-
जडीकृतपटीरभूरुहकुटीरसंचारिणः ।
मनो विधुरयन्ति मे मलयमेखला मेदुरा
दुरासदवनप्रियप्रियतमारुता मारुताः ॥ ८ ॥

इत्यालपन् करुणमेष निकटवेलं
शैलं महेन्द्रमधिगम्य मही महेन्द्रः ।
आवर्तमुद्रितमिवान्वयभूपतीना-
मव्यग्रकीर्तिनिधिमम्बुनिधिं ददर्श ॥ ९ ॥

दृष्ट्वा च तमद्भुताकृष्टमना रामस्तदिदमाचष्ट ।

द्रष्टुं गालमयाधतां फणिपतिः सीमान्तरेखा दिशो
द्वीपाः सैकतमण्डलानि तदयं दूरे गिरां वारिधिः ।
येषामेष मुखादखानि नखरैर्येनाथ वा पूरित

स्तैषां नः कुलभुजामविहतस्तेजो महिम्ने नमः ॥१०॥

अथ हरीन्द्रोऽपि महेन्द्रोपान्तकान्तारशोभिनि लोभनीयमलयबालानिले वेलावनप्रदेशे । दाशरथेर्निदेशेन निवेशयामास बलमखिलम् ।

सरसपटीरकुञ्जवनसञ्चवनाभिपतन्
मृगमदगन्धगन्धवहमेदुरिते जलधेः ।
तटनिकटे दरस्फुटिततालरसालफले-
र्दलितमदा विचेरुरदभ्ररयो हरयः ॥ ११ ॥

अनन्तरमपरमिव चलितं महाम्भोधिमम्भोधिरोधसि कृतसंवेशं रोदसी लङ्घनविसृङ्खललाघवं राघवानीकमनीकोमुखञ्चारमुखादवधार्य्य धार्य्यमाणहृदयान्तकः पङ्कलीनचरण इवैरावणो रावणो विधेयं परमजानन् जानकीमप्यविमोक्तुकामः कामपरतन्त्रितो मन्त्रिभिः समं समाजमाजगाम ।

रहस्तदानीं रजनीचरेन्द्रः प्रहस्तपूर्व्वानिदमाबभाषे ।
इदन्तु मे वाञ्छितमोचितं वो वदन्तु यद्वैरिजयोचितं नः॥१२॥

अमी च पुनराशयज्ञा विज्ञापयामासुः । देव ! जीवत्सु भवदाज्ञापरेष्वनुचरेषु परमास्मासु कस्मादयमवापो दुःखापो भुजपञ्जरानीता सीता जातु न जह्यातु नाथ इत्यभिदधानेषु प्रधानेषु रम्भोपहितहठाक्कारसम्भवसम्भोजसम्भवशापमन्तरायमावेदयन्तं दुर्नयन्तमग्रजन्मानं सम्मानबद्धविनयविज्ञानभूषणो विभीषणः सरोषमिदमवादीत् ।

अहह विधिनियोगाद्घमत्तस्त्वरेन्द्र
त्वमसि परकलत्रे दुर्निवारानुरागः ।

अवष्टब्धमिक्षाग्रामामिषग्रासमोहा-
द्विरतब्रुतजिह्वाग्रापन्नः केसरीव ॥ १३ ॥

आकर्ण्य किन्नरमुखादनघे स्ववंशे
काकुत्स्थदारहरणोपनतं कलङ्कम् ।
हा हेति मीलितदृशः करयोर्युगन्त-
द्दृष्टौ स्रुतीरपि दधातु कथं विधातुः ॥ १४ ॥

पश्येदानीमुदधिपरिखापालिता क्वव लङ्का
वाचातीतः क्व नु वनचरादागतो दुर्विपाकः ।
कर्तुं नक्तञ्चरपरिभवं कापि मायैव मन्ये
जाता सीता धरणितनया जानकी मैथिलीति ।

किं बहुना ।

न गणयसि यदि त्वं वानरं वानरं वा
ननु परिचितवीर्यौ जिष्णुभू कार्त्तवीर्यौ ।
न कलयसि यदि त्वं नन्दिशापञ्च धातु-
र्वरमपि नरवर्जं दुर्जयो दैवयोगः ॥ १५ ॥

इत्यादिनीति सहितं हितमभिहितवन्तं निजमनुज-
मवज्ञाय भ्रातिरयं प्रातिपक्षः शिक्षणीय इति शंसन्तं
नृशंसतममन्तुद रोषणभाषणो बिभीषणो विहाय विहा-
यसि समुत्पतन्तमनूत्पतद्भिश्चतुर्भिरमात्यैः सममतीत्य
वारिधिं दूरत एव सवितर्कमुदग्रीवान् सुग्रीवादीनन्तरिक्ष-
गत एव माचचक्षे ।

पौलस्त्यमग्रजनुषं प्रकृषञ्चरन्तं
सन्त्यज्य बान्धवजनञ्च बिभीषणोऽहम् ।
रामं विराममिह विद्विषतामवाप-

शापन्नदैन्यहरणं शरणं ममेति ॥ १७ ॥

अनन्तरमतिकरुणं समीरयन्तं समीरभुवा च सप्रत्यभिज्ञविज्ञापितं निशाचरपतेरनुजं निशम्य तदा तदागमनाय किं कारणमिति शङ्कापरवशे निवेदयति हरीशे दाशरथिरपि दयमानः स्मयमानो मधुरमिदमभाषत।

अभयागतोऽयमपयाति चेन्मुधा
रघवो भवन्ति लघवो न किं सखे!।
अनुजोऽयमस्तु तनुजोऽथवा रिपोः
करुणापदं हि शरणागतो जनः ॥ १८ ॥

तदनु हृदयविदा हनूमता सरयमानीतो विनीतोऽथ-
माशरपतिरवन्दत दाशरथिम्।

रामस्तमाह विनतं रजनीचरेन्द्रं
दत्तं तदद्य भवते दशकण्ठराज्यम्।
अस्मिन्नुदाहरणमग्रज राज्यभोक्ता
सानुप्लवः प्लवगमण्डल सार्वभौमः ॥ १९ ॥

श्रेयः पदात्पदमुदेति विधेः प्रसादात्
प्रायस्तदद्य फलितं हि विभीषणे यत्।
रेखातपत्रसहितं पदमस्य हन्त
एकातपत्रसहितं पदमेष भेजे ॥ २० ॥

असौ पुनरग्रत एव भरताग्रजापाङ्गसुधातरङ्गाभिषिक्तोऽपि पुनरुक्तराज्याभिषेकः सकलविस्रम्भभाजनतया सुग्रीव इवापरो दशग्रीवबलमखिलमावेद्य सद्य एव लङ्कापुरसमास्कन्दनाय सेनासमुत्तरणहेतुं सेतुं विधातुमाराधयतु वाराम्निधिमिति सविनयमेनं विज्ञापितवान्।

अथ वारान्निधिस्थायन्नम्भोधिह्रदये शयः।
व्यानशे दर्भशयनं वेदीमिव हुताशनः॥ २१॥

तत्र कुशास्तरणमध्यमध्यासीने निध्यानवति देवे रामचन्द्रे नियन्त्रित इव नियतिवशान्निशावयमपि प्रसादं नाससाद यादसाम्पतिः।

व्यापारयन्नथ विलोचनकोणमब्धौ
कोपारुणं कुटिलितभ्रुकुटीविटङ्कः।
आदातुमैहत धनुः प्रथमो रघूणां
पैतामहं प्रथमसर्गसमापनाय॥ २२॥

आदाय च दुरापं चापमारोपयत विशिखमनलशिखम्।

नाथो विमोक्तुमुद्युक्त न यावदेव
पाथोनिधेरुपरि पावकरूपमस्त्रम्।
सन्तापिनी नयनवारिमिषेण ताम्यन्
मन्दाकिनी किमुत वारुणमाललम्बे॥ २३॥

कथा शिखिमुच्छिखं जहति राघवे लाघवाद्
अजायत रजायतश्वसितनक्रचक्राकुलम्।
रसातलवलत्तिमिस्तिमितकुम्भिकुम्भीनस
प्रविष्टगिरिकन्दरस्तरलमन्तरं वारिधेः॥ २४॥

तत्क्षणं जलनिधिः सन्ता च युगान्तानलस्य सहनोऽपि गरलदाहनोष्मणां सोढ़ापि वाडवगाढ़ावलेपस्य तितिक्षुरपि भार्गवतीक्ष्णपरशोः परिशोषयन्तमन्तरङ्गमङ्गारमयं शरमयं निमिषमपि न विषेहे।

शरणमथ शरव्यथानिदानं जलनिधिरेष जगाम राममेव।
पतदशनिकुलिशपातमेव किं वा जलधरमर्थयते न जीवलोकः॥ २५॥

आगत्य चानुपदमुपदीकृतनूतनरत्नराशिर्वारिराशिर्विनीतवेशो विशेषोपजातनतिभिर्नुतिभिरभ्यनन्दयद्रघुनन्दनम् । तदनु तदनुसंहितममोघमस्त्रं वैधात्रं क्वचन वनसीमनि विनिपात्य साध्यते मया सलिलविष्टम्भः सम्प्रत्येव नलो विदधातु सेतुमित्यभिदधानो मन्दमन्दमन्तरधात् ।

आदिष्टा रघुपुङ्गवेन हरयोऽप्यष्टासु दिक्षु क्षणात्
त्रैलोक्याश्रितमूलमभ्रशिखरान् धात्रीधरान् आहरन् ।
यैः क्षिप्तैः सलिले नलेन जलधिर्यातोऽपि जम्बालतां
निर्गच्छत्य चिराय निर्झरपयःपूरैः पुपूरे पुनः ॥२६॥

अथ जलधौ निपेतुरतिदूरनिपातदल-
ज्जलचरदत्तजीवनवगन्धमहौषधयः ।
स्फुटितधराविराजदहिपुङ्गवफूत्करणा-
क्षुभितगुहागृहासिकमहाहरयो गिरयः ॥ २७ ॥

अलक्षितमहीधरग्रहणमस्फुटक्षेपणं
विचित्रघटनं ततो विरचितो नलेनामुना ।
अबोधि हरियूथपैरधिपयोधिसेतुर्महान्
भुवा भुज इवाभवन्निजतनूभुवो लम्भवन् ॥ २८ ॥

अनन्तरं अन्तर्मुखा इव बलीमुखाः प्रबोधेनेव सेतुपथेन संसारमिव दुस्तरन्तरणिपतिमतीत्य सद्य एव प्रकाशं गिरीशं सुवेलमवलोकयन्तो मुहुरविन्दन्त महान्तमानन्दम् ।

वलयिततटदेशैर्वाहिनीनां निवेशै-
रविरलवनरेखामध्यमध्यास्त रामः ।
कपिकलकलशौर्यत्कन्दरामन्दिरान्त-

स्खलितकुपितसिंहत्रस्तवेलं सुवेलम् ॥ २९ ॥

तदनु दशमुखः शुकमुखादतिलङ्घितजलधिमधिगतसुवेलारामं रामं निशम्य सम्यगवगमनाय रघुनायकबलमनुप्रहितयोर्विदितवेषविभीषणावेदितकुपितकपिलोकनियन्त्रणनितान्तखिन्नयोर्विपन्नाधारदाशरथिविमोचितप्राणयोः शुकसारणयोर्वचसा प्रासादाग्रमासाद्य प्रत्येकशस्ताभ्यां वेद्यमानान् प्रवर्द्धमानसमरसन्नाहमतीन् प्लवङ्गमसेनाधिपतीन् अतिधीरतया सावधीरणमवेक्षमाणः प्रतिपक्षबलप्रशंसिनौ तावुभावप्युपेक्षमाणः शार्दूलप्रभृतिभिः प्रणयिभिरप्यवगताशेषवृत्तान्तः सान्तस्तापः सुचिरमनुचिन्तयन् अन्तिकासीनमतिविनयप्रह्वं विद्युज्जिह्वमुपह्वरे किमप्यभिधाय सौधादवततार। तत्क्षणं क्षणदाचरोऽपि निर्दिष्टानिशाचरपतेर्दाशरथिशिरः सशरमनुरपि निर्माय मायानुभावादाहवानीतमित्यभिधाय निधाय च पुरो निदाघातिशयसन्तापिनीं वासन्तीमिव वैद्युतामलक्षितकालविह्वलामाकुलीचकार मैथिलीम्। ततः प्रबुद्धा च मुग्धा पुनस्सत्यमिति विचार्य तदनार्य्यं पर्य्यदेवयत पतिदेवता।

रक्षोवरोधवसतिं रजनीचरीणां
रक्षोपरोधमपि रावणभर्त्सनञ्च।
सर्वं सहे यदुपलम्भधिया स एवं
सर्वंसहे भवति जीवति हन्त सीता ॥ ३० ॥

एवमत्याहितमत्यासमेतामेतामेतामासाद्य सखि वैदेहि वैदेहि वचः कथमियं तव दीना दशा दशाननकृता मायाहि मायाहि मनसि वैधुर्य्यं निखिलजगती धुर्य्य-

भुजबलाभिरामे रामे किमिदमनार्य्यमविचार्य्यमित्यभिदधाना नवीना सारनिष्यन्दिनी कादम्बिनीव घर्मोद्वेगिनीं केकिनीं सरमा चिरमाश्वासयामास।

अथ निगदितनीतिं मुञ्च मुञ्चेति सीताम्
अविरतरणकण्डूभीषणो रावणोऽयम्।
मनसि न बहु मेने मन्त्रिणां माल्यवन्तं
दिवि परममरीणां मण्डलं माल्यवन्तम्॥ २१॥

अथ रामोऽपि कामोचितवेषविभीषणामात्यविदितरक्षोनगररक्षोदन्तो हृदन्तोपजातसमरसंरम्भविधिरम्बुधिमेखलालङ्कारमणेर्लङ्कायाः प्राग्द्वारस्थाय प्रहस्ताय पर्य्यस्ताहितप्राणानिलं नीलं दक्षिणद्वाररक्षिणोर्महोदरमहापार्श्वयोर्विश्वत्रयविजयधौरेयस्तारेयं प्रत्यग्द्वारपालनाधिकृते पाकशासनजिते पराक्रममिव तनूमन्तं हनूमन्तमन्तर्व्यूहविहितरक्षाय विरूपाक्षाय रक्षःप्लवङ्गमकटकाधिपतीन् प्रतिनिधीन् विनिधाय विधाय च सज्जं धनुरनुजेन समं समीकाभिमुखेन दशमुखेन गुप्तमुत्तरं गोपुरमुत्तरङ्गी बलैरुपरुरोध।

अत्याकुलां हरिबलैरवलोक्य लङ्कां
दत्तार्गलेषु दशकन्धरकिङ्करेषु।
आरक्षकैस्त्वरितमन्तकराजधान्या-
मुद्घाटिताभिरुदभावि कवाटिकाभिः॥ २२॥

ततक्षणाच्च लक्ष्मणाग्रजः सुग्रीवेण सह सुवेलाचलकूटमधिरूढस्त्रिकूटावनीधरचूडामणिं सिंहलद्वीपकमलकर्णिकां निर्म्माणकौशलीं विश्वकर्म्मणो निवेशदर्शीं निशाचरहरीणां

अनारतवन्दीकृतामरपुरन्ध्रीवाष्पनदीमातृकोपवनसीमान्तां सीमान्तरात् निरन्तरसेवासमागतदिक्पालमातङ्गमदाम्बु-पङ्किल बाह्याङ्गणोत्सङ्गां लङ्कामवलोकमान स्तत्रैकत्र समुन्नतं सौधमधिवसन्तं सन्तमसमिव सदेहबद्धमन्तिकचरोदस्त विमलमुक्तातपत्रमिषात्सतारकेण विभावरीपतिनेव सेव्यमानं वैमानिकवधूविधूयमानचामरवृन्दशोभितमभितश्चलितमन्दा-किनीपरीवाहमिवाञ्जनाचलमखिलजगद्विजयवर्णावलीमति-निर्णायकैरनेकविधसमीकाभिघातमग्नभग्नै रावणविषाण कुलिशाग्रैरुत्कीर्णं विशालवक्षःस्थलफलकमानीलतमालस-च्छायमाच्छादिताभिनवलोहितपटमापाटलसन्ध्यारागबन्धु-रक्तन्धरमिव ददर्श दशकन्धरम् ।

कोपादुत्पतितस्तदा हरिपतिः कोटीरमुत्पाटितं
चक्रे नैर्ऋतनायकस्य सुदृढ़ीचक्रे च वै भीषणम् ।
युध्वा च प्रथमावमान कुपितेनैतेन बुध्वा ततो
मायामस्य जगाम कोमलगुणग्रामं स रामं पुनः ॥३३॥

ततस्तत्साहसोपलब्धविधिना दाशरथिना समामन्त्र्य मन्त्रिभिः सममादिष्टः साधिष्टभुजशौर्य्यशाली वालिनन्दनः सलीलं सालमुल्लङ्घयन् लङ्कां प्रविश्य नृशंसमिति शशंस निशिचरपतिम् ।

सोऽहं प्लवङ्गमपतेस्तनयस्त्वदीय-
निश्वासरोधिनिजबालधिमण्डलस्य ।
कालस्य दूषणखरत्रिशिरोमुखानां
पौलस्त्य ! मां रघुपतेरवधेहि दूतम् ॥ ३४ ॥
रक्षःपते ! रघुपतेर्नयनं तृतीय-

मास्कन्दनीयमिति हा मनुषे कलत्रम् ।
अम्भोजमित्यलिकसम्भव मद्रि शम्भोः
मन्दाकिनी मधुकरस्तु यथा मदान्धः ॥ ३५ ॥

किञ्च ।

एकं हैहयसम्भवात्परिभवान् म्लानं द्वितीयं पुन-
र्दैत्येन्द्रा विनयात्तृतीयमपि मे ताताद्धिताद्वैकतात् ।
इत्थं त्वच्चरितैः पितामहमुखान्येकं विनैवाभवन्
तच्चैकं न विधेहि दाशरथये देया त्वया मैथिली ॥३६॥

कौवेरस्य तु पुष्पकस्य हरणं कैलासविक्षेपणं
दिक्पालाक्रमणञ्च जल्पसि मुहुः किम्वा यशस्तावता ।
वेषं संयमिनो विधाय विजने देवीं वने जानकीं
वेगादाहरता त्वयाद्य रचितां वीरव्रतस्योचितम् ॥३७॥

किं बहुना ।

पूजोपहाररचनाय पुरा पुरारे-
श्छिन्नेषु मूर्द्धसु नवस्ववशेषितं यत् ।
देवस्तदद्य कुतुकी दशमं शिरस्ते
रामो बलिं रचयितुं रणदेवतायै ॥ ३८ ॥

एवमरुन्तुदभाषणरोषणेन रावणेन गृह्यतामयं निगृह्यतामिति सरयमादिष्टानालम्बितभुजप्रकोष्ठानाशरांश्चतुरश्चतुरोऽयं भुजङ्गानिव विहङ्गाधिपो गृहीत्वा भुवि निपात्य चैतान् पादाहतेन प्रासादशृङ्गमपि भिन्दन्नविन्दन्नात्मनः प्रतिरथं पङ्क्तिरथभुवो विवेश निवेशम् ।

रघुतनयस्ततो विदितरावणदुर्विनयः
कुपितमना मनागिव दधे कुटिलां भ्रुकुटीम् ।

अथ परिवव्रुराशरपुरं हरयः सरयं
युगविगमे यथा युगपदम्बुधि मौर्वशिखाः ॥ ३९ ॥
ततो मदपरिप्लवत्प्लवगवीरसंरम्भण
क्षणक्षुभितकौणपप्रकरपाणिकोणाहतः ।
रवैरधिकभैरवैरुपवरोध रौद्रोत्तरं
तरङ्गितघनाघनस्तनितबन्धुभिर्दुन्दुभिः ॥ ४० ॥

तेन च समन्ततः कन्दलयता दलयतेव जगन्ति दुन्दुभिनिर्घोषेण रोषेण च प्रेर्यमाणाः केसरिण इव गिरिकन्दरान् मन्दिरान् निर्गत्य गत्यन्तराय सम्भाय कान्यपत्यानीवा निमित्तान्य नवलोकमाना विमानाधिगतविबुधसीमन्तिनीभिः सह विजिहीर्षयेव प्रस्थानसमयपरिम्लानमुखीः सुमुखीरप्यगणयन्तो निरन्तरज्वलितकोपानलनयनकोणकणालातशतनिपातविव्रासचलितनिजवारणानिवारणावेशपरवशाः दिशामुखमुखरितशिवारवास्त्रेडितव्याकुलीकृतकुलमहीध्रगह्वरायतपत्त्वविक्षेपकृतपताकानिकाय पुनरुक्तसमुत्तुङ्गशताङ्गसङ्घातपरिगता नितान्तनिशिता कृतान्तदंष्ट्राखरतरनखरपट्टीसप्रासपरशुगदामुसलशक्तितोमरमुद्गरपरिघद्रुघाणकृपाणधारिणो दारुणा जगरसन्तानसंवीता इव विन्ध्यकूटा व्यूढातिकरालकालायसकङ्कटा विकला इव कल्पाम्बुदानां व्यक्तय इव कालरात्रेर्विवर्ता इव कालिकाःलस्य च भयङ्कराः समराङ्गणमवतारयन्तः समीरयन्तो वीरवादामादाय च शरासनमासारैरिव गिरिमम्भोधरा दूरापातिभिः शिलीमुखैर्वलीमुखबलमखिलमक्षोभयन्त रक्षोभटाः ।

ततो धुतनखायुधस्तरुपरित्रुटत्तोमरः
शिलानिहतमुद्गरः शिखरिभिन्नमत्तद्विपः।
स्वपक्षविजयैषिभिर्दिवि सुरासुरैराकुलै-
रलक्षि हरिरक्षसामतिभयङ्करः सङ्गरः॥ ४१॥

क्रमेण च कुपितकपिवीरविदूषितनैर्ऋतभुजप्रतापानल इवास्तं भजति भगवति भानुमति मथितायुधयातुधानगलनालप्रणालपरिवाहि लोहितनदीपूर इव विदूरमन्तरित हरिद्राभोगे सन्ध्यारागे विक्रान्तहरिनखाक्रान्तदन्तावलविपुलकुम्भस्थलमुक्तमुक्ताकलाप इव वियति विजृम्भमाणे ताराङ्गणे रणरभसचलितरथगजतुरगपदातिपादाहतविश्वम्भरान्तराल जनुषि रजसीव भुवनमाक्रन्दति तमसि तामसीचरेष्विव सशोकेषु चक्रवाकेषु दाशरथिबल इव प्रमदाकरे कुमुदाकरे।

आसारधारां प्रकिरन् शराणामाश्वासयन्मानसमाशराणाम्।
वीरो हरीन् संयति मेघनादो विन्ध्याध हंसानिव मेघनादः॥४२॥

रणे तदनु दारुणे रभसमङ्गदो रावणे-
र्द्रुमेण महता हतःस्वथधुरीणयानव्रजम्।
शितेन शतकोटिना शिखरिकूटमिन्द्रो यथा
ममाथ च रथं मनोरथमपि क्षणाद्रक्षसाम्॥ ४३॥

वियत्तले तदनु विलीयमायया
सलक्षयन् रघुतनयं सलक्ष्मणम्।
अजिह्मगानधिगतजिह्मगाकृतीन्
अमर्षतः समिति ववर्ष रावणिः॥ ४४॥

लक्ष्मणानुगतं रामचन्द्रं राहुभयङ्कराः।

बबन्धुर्दारुणतमा बन्धच्छिदममी शरा: ॥ ४५ ॥

याऽयाति पुरं पुरन्दरजयी यावद्दशास्यात्मजया
सीता पुष्पकवासिनी रघुसुतौ दृष्ट्वा पुरः शोचति ।
तावत्तौ गलिताः सुपर्णगरुतां वातेन वातात्मजा
दीप्तौ चन्द्रदिवाकराविव तमो मुक्तौ ततो राघवौ॥४६॥

दुर्वारे तदनु द्वयोश्च बलयोरुज्जृम्भमाणे रणे
धूम्राक्षं भुजतः प्रकम्पनमथद्वेधा व्यधान्मारुतिः ।
तारेयोऽपि च वज्रदंष्ट्रमचलान्नीलः प्रहस्तं बला-
त्तस्यं दशकन्धराय चकितैरुक्तश्च नक्तञ्चरैः ॥ ४७ ॥

अथ तदानीमनीकिनीनाथवधकोपोदयादायोधनोत्कण्ठो दशकण्ठः सकलजगदण्डभरितजयानकभयानकनिनदबधिरिताशेषशेषाहि लोचनो रोचिष्णुजिष्णुकोदण्डधरः सलिलधर इव सुमेरुशृङ्गं समुत्तुङ्गं रथमलङ्कुर्वन् सर्वतश्चलितसकलचतुरङ्गसङ्गतया लङ्कयेव स्वयं अनुगम्यमानः क्रमादतिक्रम्य पुरतो रणं पुरतोरणाच्चलितमालोकयत निखिलमपि वलीमुखबलम् ।

सीतारमास्त्ववमुखे दशदिक्पतीनां
दृष्ट्वा पुरो दशमुखं रघुनन्दनस्य ।
श्लाघावशेन न चचाल शिरः परन्तु
सव्येतरं भुजशिरोऽपि समीक्ष्य लक्ष्यम् ॥ ४८ ॥

अथ मदगर्जितैरधिकतर्जितदिक्करिभि-
र्दशवदनस्तदा दशदिगन्तरमन्तरयन् ।
समरमुखे सखेलपदचंक्रमतो विदधे
हरिकुलमाकुलं जलधिमादिवराह इव ॥ ४९ ॥

अनन्तरमनीकाः स्कन्दकन्दरिताम् अर्षन्तं गिरीन् हरीणामधिपतीनतिनिष्ठुरेण मुष्टिना गाढ़मभिनिघ्नन्तं हनूमतममन्दलाघवाक्रान्तध्वजकिरीटाद्यलं नीलमपि निखिलजगज्जिता महता बलेन वातूल इव तूलजालं कपिकुलमपसारयन्नविरतशरासारवर्षिणमभ्यमिनीणसौमित्रिमपि शक्त्या गाढ़मुरसि विव्याध क्रव्यादाधिपतिः ।

प्रवकीर्य दाशरथिरस्युभ्भरै-
रनुजं पुलस्त्यतनुजस्य शरैः ।
युगपद्वत्रधात्करुणावीररसौ
युधि शोकहर्षं शकुलस्य बलम् ॥ ५० ॥

आधूय मोहमहितोन्मथनाय यावत्
सौमित्रिरेष समुदच्चति तावदेव ।
पौलस्त्यमेष परिभूय परं तदीयान्
प्राणान् मुमोच दयया न मुमोच बाणान् ॥ ५१ ॥

प्राप्य तत् प्रथमं युद्धे पराजयमुद्रे जयन् ।
दशाननः पुरीं प्राप दिनदीपदशाननः ॥ ५२ ॥

प्राबोधयत्तदनु पङ्क्तिमुखः शयालुं
कालं विनापि च कथञ्चन कुम्भकर्णम् ।
आदेशतः स च विभोरपुनः प्रबोध-
संवेशधाम समराङ्गण माजगाम ॥ ५३ ॥

आगतञ्च तमञ्जनाचलनिकाशमाकाशतलभ्रमितत्रिशूलं शूलधरमिव जगत् सयोद्युक्तं नक्तञ्चरमवलोक्य शाम्यत्सहजभुजतेजोविशेषमशेषासु दिक्षु धावमानं पवमानचलितजलदपारिप्लवत्प्लवगबलमङ्गदो धीरमवादीत् ।

कपयः क्व कसेयानां क्वापि सेयं विभीषिका ।
अभूदभूतपूर्वं वः प्राकृतं भयवेकृतम् ॥ ५४ ॥

अथ हरयोऽपि सरयमनुनयसङ्गतमङ्गदवचनमवधारयन्तो धारयन्तः समरसन्नाहान्दिग्भागा इव प्रतिनिवृत्ताः प्रयत्नाश्रयमिवैरावणं रावणानुजं विन्ध्याचलमिव युगान्तानिलाः समन्तादाहृतैर्गिरिभिस्तरुभिरप्यवाकिरन् ।

छिन्नाः संयति पुष्पिताः क्षितिरुहास्ते रक्षसो वक्षसि ।
प्रक्षिन्ने पटवासपांसव इवालीयन्त चूर्णीकृताः ।
मुक्ता ये धरणीधरा मुहुरमी तद्बाहुमङ्घट्टनात्
प्रत्यावृत्य पञ्च प्रहर्तुरभवन् खेदाय भेदाय च ॥ ५५ ॥

ज्वलदनलं त्रिशूलमुपरिभ्रमयन्नमयन्
नयमवनीमनीकमदखेलनदुर्ललितः ।
सपदि बभञ्ज नीलमृषभं शरभञ्च बला-
दहरत गन्धमादनमरन्ध गवाक्षमपि ॥ ५६ ॥

ततश्च सहजवलचापलाधिगतलाघवं राघवं शरणमशृणां राघवानीकमाश्वासयन् विश्वाधिकविपुलभुजवीर्य्यो विकीर्य्यद्विषति सर्वतः पर्वतान् विधाय विचित्रमति चिरं युद्धं नक्तञ्चरविमुक्तधाभीधरवशः कुलिशदारित इव कुलभूधरो धरायामचेतन इव पपात हरिकुलपतिः ।

परिगृह्य तं झटिति बाहुपञ्जरे
चलिते पुरं तदनु रावणानुजे ।
अविनीत वालिकृतमद्य नः प्रभो-
रयशः प्रमृष्टमिति हृष्टमाशरैः ॥ ५७ ॥

तत्र विचित्रकुसुम परिमलशिशिरोपचार सचेतनोद्गीव

सुग्रीवनखमुखाकलितशूर्पणखामुखानुकारः सचमत्कारमुत्पुत्याधिगतमेनमनालक्ष्य वैलक्ष्यतः प्रतिनिवृत्तो विवृत्तोत्तारकेक्षणः क्षणदाचरः प्रतिक्षणमतिक्षीबतया प्रतिपक्षबलमिव स्वपक्षबलमपि भक्षयन् लक्षयन् सौमित्रिमद्रिशिखरान् विमुञ्चन्नेवायमञ्जसा राममाजगाम ।

भिन्दन् शूलमथार्धचन्द्रमुखतो वीरो रघूणां पति-
र्बाणानत्र मुमोच वालिविपदो मारीचमर्मच्छिदः ।
आलोक्याथ स तान्विदारितशिखानस्मिन् न किञ्चित्करा-
न्वायव्यं पुनरैन्द्रमप्यरिवधूवैधव्यधुर्यं दधे ॥ ५८ ॥

रामास्त्रोद्दलितेषु राक्षसपतेरङ्गेषु तुङ्गो भुजः
प्रागेको निपपात मन्दर इव प्रत्यर्थिसेनाम्बुधौ ।
सिन्धौ निष्पतितः परोऽपि ददृशे सेतुर्द्वितीयो यथा
छिन्नं व्योम्नि शिरस्तुरीयमभवत् कूटं त्रिकूटस्य च ॥५९॥

तदनु तदनुमोदभरितहरिबलकोलाहलाकर्णनविदितकुम्भकर्णवधपरिम्लानमुखेन दशमुखेन सहोदरमहोदरमहापार्श्वौ सहायौ विधाय समादिष्टाः कुमाराः नरान्तकदेवान्तकातिकाय त्रिशिरसः पितुर्निदेशान्निवेशमिव पितृपतेः प्राविशन्नमी समीकभुवम् ।

अजनि पुनः समीकमनयोरुभयोर्बलयो-
रवदलिते मुखे च यदनुज्झितरोषभरम् ।
अमरमृगीदृशामपि यदाशयपूर्तिकरं
समरसमुत्सुकेन मुनिना यददृष्टचरम् ॥ ६० ॥

ममाथ शैलैरथ वालिनन्दनो
नरान्तकं संयति वामरान्तकम् ।

हनूमता सोऽपि हतः सुरान्तकः
पुरान्तकेनेव रुषा पुरान्तकः ॥ ६१ ॥

अनन्तरमसमसमरशीलेन नीलेन निहते महोदरे मारुतिमथितशिरसि त्रिशिरसि विशसितेषु महापार्श्वादिषु वाहिनीपतिषु निर्भरविषादरोषपरवशो निशाचरः सकार इव तमोनिकायः सरथमतिकायः समागत्य वृत्रासुर इव सुत्रामणा सुमित्रासुतेन सह वितेने विचित्रमायोधनम् ।

स च सुचिरं नियुध्य तमवध्य इतीव वरा-
दनिलगिराविबुध्य पुनरस्त्रमधत्त विधेः ।
दलितमनेन तद्दिवि समुत्पतितं जगता-
मतनुत राहुभीतिमधिकामतिकायशिरः ॥ ६२ ॥

अनुनीय रावणिरथो विधुरं
पितरं दधत् पृथुसमीकधुरम् ।
सरथो समेत्य सधनुःशरधि-
श्वलितश्चमूभिरधिदाशरथी ॥ ६३ ॥

अधिसमरमरातिजयमनोरथाय रथाभिरक्षायै रक्षांसि परितः प्रकल्प्य प्रतर्प्य च हविषा प्रदक्षिणशिखावन्तं मन्त्राधिगतानि विचित्राण्यस्त्राणि दधानस्तिरोधानगत एव शितमुखैः शिलीमुखैर्निर्माय निखिलमर्माहतिं निस्त्र-पक्रमः क्रव्यादो व्याध इव हरीन् विधुरीचकार ।

सहलक्ष्मणं तमपि दाशरथिं
परुषो निदाघ इव पद्मसरः ।
विकलाशयं विधुरसत्त्वमयं
विरचय्य धाम च जगाम शरैः ॥ ६४ ॥

घनार्कभवतेजसि क्षपितरामचन्द्रद्युतौ
विमुच्य सति निर्गते विशिखवृष्टिमस्मिन् घने।
प्रदीप्तनलमस्फुरत्कुमुदमस्तनीलोत्पलं
समुत्तरलजीवनं समभवत्तदा वाहिनी ॥ ६५ ॥

अचलमथ सलीलमोषधीनां
हरति हनूमति जाम्बवन्नियोगात्।
विचलितमभवद्बलं विशल्यं
विबुधमनोऽपि धूतशोकशल्यम् ॥ ६६ ॥

तेन पुनः सहजतेजोभरितेन दावानलेनेव वानरबलेन दह्यमानां दरीमिव पुरीं विहाय पञ्चाननाविव पङ्क्त्यानननिदेशितस्खलितमखिलरिपुप्रकम्पनमकम्पनमाहतप्लवङ्गसङ्घं प्रजङ्घञ्च अङ्गदभुजप्रतापानलशलभावुभावपि निशम्य निशम्य च द्विविदमैन्दावदारितौ महारथौ शोणिताक्षयूपाक्षावपि कोपाक्रान्तपरुषसंरम्भौ कुम्भनिकुम्भौ समुत्तम्य बाहुं सुबाहुमारीचाविव राघवभ्रातृभ्यां सुग्रीवहनूमद्भ्यामद्भुतं युद्धमतनिषाताम्।

भूमौ ततः प्लवगराजभुजेन विद्ध-
मालोक्य कुम्भमसहन्विरहं तदीयम्।
शोकादगादनिलसूनुहतो निकुम्भ-
स्तन्नामयुक्तममरीकुचकुम्भमेव ॥ ६७ ॥

ततः कौणपपतिनियुक्तं युक्तमखिलवाहिनीभिराहवाटोपमुखरं खरात्मजं मकराक्षमैक्ष्वाकशरोऽपि विपक्षमपि सपक्ष इव समक्षनयज्जनयितुः।

छित्वा मूर्द्धनि शासनं पितुरथो गत्वा रणं रावणि-

हुत्वा तत्र महाभुजो हुतभुजं छत्वा महास्त्राणि च ।
स्थित्वा व्योमनि मायया शरचयन्त्यक्त्वा च भित्वा चमूं
बुध्वा राघवकोप माप सहसा लङ्कामलं कातरः ॥६८॥

ततः प्रतीचः प्रतिहराद्यं स प्रातिहारिको निर्गत्य निकृत्यासिना काचिदाञ्जनेयस्य पुरतो मायामयीं मैथिलीमाकुलीकृतमनसि तस्मिन्नाकस्मिकमिदमतथ्यमपि तथ्यमेव बुध्वा चिराय युध्वा निराशे प्रतिनिवृत्ते विद्विषि विपक्षपर्य्युविग्रसनारम्भि निकुम्भिलामासाद्य सद्य एव प्रावर्त्तत सवमतिविचित्रम् । तदनु हनूमतः प्रतिनिवृत्ताद्गमेतदाकर्ण्य विशीर्णमानसो मानसचर इव वज्रनिर्घोषाद्विषादाकुलो राजहंसः संसदि निपत्य सौमित्रिणा समाश्वास्यमानः सकरुणं निश्वस्य विश्वस्य पतिरपि विधुरं व्यलापीत् ।

जज्ञे तदत्र भवती जनकस्य यज्ञे
देव्याश्चिराय धरणेररणेः शिखेव ।
वंशे मनोरपि वधूरभवत्किमन्य-
द्रामस्तवापि विधिना रचितोविरामः ॥ ६९ ॥
यत्नो मुधा भवति यत्र समीरसूनो-
र्नालं नलोऽपि नवसेतुनिबन्धनाय ।
दूरे च पावकशराद्दुरतिक्रमोऽयं
तत् केन शोकजलधिस्तव लङ्घनीयः ॥ ७० ॥

इत्यादि परिदेवमानमेनं विदिता शरमाया विशेषो विभीषणः समागत्य देव ! भवतोऽपि किमिदमस्थाने दीनमवस्थानम् । निरन्तराय मखनिर्वर्त्तनाय पुरन्दरारिणा

कृतं कृत्रिममेतदित्यवधार्य्य धारय मनसि धैर्य्यमित्यभिधाय तद्वधाय लक्ष्मणं तत्क्षणमेव पुरस्कृत्य निकुम्भिलामुपरुरोध।

हरिकुलारवतश्चलितस्ततो
गिरिदरीकुहरादिव केसरी।
अपरिपूर्य्य रुषाहवमाहवं
स विदधे बलशासनशासनः॥ ७१॥

वातूल इव तूलानां वानराणां रणाजिरे।
विद्रावणस्ततो माया विद्रावणसुतोऽभवत्॥ ७२॥

अनुपदमनीकिनीनाथनिधनसंरब्धतरं संवर्त्तप्रवृत्तमिव कृतान्तं समराङ्गणमापतन्तं स्यन्दनगतं तं संक्रन्दनजितं गन्धवाहनन्दनस्कन्धवर्त्ती सौमित्रिः प्रवर्त्तितशितशरधाराभिः शतधारपाणिरिव जम्भमस्तम्भयत्।

परस्परमदोत्कटं प्रचुरवीरवादोद्भटं
पतत्त्रुटितकण्टकं प्रतिहतास्त्रमस्त्रेण च।
जगत्त्रयभयावहं जयपराजयागोचरं
वितेनतुरभाविभाविव तदारणं दारुणम्॥ ७३॥

शतधारकठोरशिखैर्विशिखैः
शतधा विरचय्य शरासगुणम्।
विदधे विबुधेशजितं समरे
हतसारथिमप्यथ दाशरथिः॥ ७४॥

यदुचितमहो मायाशीलस्य यद्भुजशालिनः
सदृशमथवा युक्तं मत्तासुरेन्द्रसुतस्य यत्।
शतमखजितः शौर्य्यं यद्वानुरूपमथात्मन-

स्तदकृत तथा मन्दो मन्दो दशीतनयो रणे ॥७५॥

अनुपदमभिषिषेण अभिषेणं नयति विभीषणे तेन मुक्तां शक्तिमर्द्धचन्द्रेण दारयन् अपारयन् सोढमदसीयमविनयममर्षाकुलः सौमित्रिरमोघं माघवतास्त्रममुञ्चत् ।

पतति स्म तत्प्रथममस्त्रमुज्ज्वलं
सशिरस्त्रमिन्द्रजयिनस्ततः शिरः ।
अनुपुष्पवृष्टिरवनौ दिवौकसा-
मथ बाष्पवृष्टिरमरारियोषिताम् ॥ ७६ ॥

श्रुत्वा शक्रजितः सुतस्य निधनं शोकेन रक्षःपतेः
श्रान्तं निश्वसदश्रुपूरभरितं क्रन्दच्च फूत्कारि च ।
कोपेनाथ विपाटलं कुटिलितभ्रूवल्लिवृत्तेक्षणं
जज्ञे दष्टघनोष्ठमट्टहसितोद्वृत्तं समस्तं मुखम् ॥ ७७ ॥

अनन्तरमपाक्रान्तासु सुविक्रान्तेषु पुरन्दरारिमुखेषु नन्दनेषु निहतेषु कुम्भकर्णादिषु भ्रातृषु विध्वस्तेषु प्रहस्तपूर्वेषु सचिवेषु व्यतीतेषु विरूपाक्षप्रभृतिषु सेनापतिषु कपिविमर्दनेन विशीर्णे भवति निखिले बले समन्ततः पौरवधूजनपरिदेवनोत्तरङ्गायां लङ्कायामातङ्कातिशयरोषणो रावणस्तत्क्षणमेव हर्यक्ष इव हरिणीं धरणीसुतां जिघांसुरन्तिकगतेन मन्त्रिणा निवार्यमाणः सारथिना विधिना च संचोदितो दाशरथिविजयविहितसङ्गरः सङ्गरभुवमवततार ।

कोपादसौ परिघयष्टिकुठारकुन्त
चापासिगद्रुहिणशक्तिकपाणपाणिः ।
एकोऽप्यनेकमुखबाहुतया सबन्धु-

र्तौको यथा समिति लोचनगोचरोऽभूत् ॥ ७८ ॥

अलक्ष्यत सरक्षसामधिपतिः कृपाणं मुहुः

प्रहस्य विनिपातयन् प्लवगमण्डलीमौलिषु ।

अयं तव तवायमित्यधिसमीकमेकैकशो

वरानिव विनिर्दिशन्नमरवारवामभ्रुवाम् ॥ ७९ ॥

तदनन्तरमक्षौहिणीक्षोभकन्दलितरुषमतिपरुषविशिख-दलितध्वजमर्द्धचन्द्रनिकृत्तधन्वानमस्त्रधारावदारितसारथि--मतिविस्मयनीयकरलाघवं राघवानुजममर्षवेगमुक्तया शक्त्या मूहूर्त्तमिव मूर्च्छानिमीलितमुपराग इव कमलाकरमातताम यातुधानपतिः ।

आलोक्य दीनमनुजं हृदि शक्तिघाता-

च्छोकेन विद्धहृदयः सुतरां स रामः ।

कोपेन चापमथ कुण्डलयाञ्चकार

लङ्कापतेरपि ललाटलिपिं विधाता ॥ ८० ॥

अवकीर्य्य दाशरथिरश्रुजलै-

रनुजं पुलस्त्यतनुजञ्च शरैः ।

युगपद्व्यधात्करुणवीररसौ

युधि शोकहर्षशबलञ्च बलम् ॥ ८१ ॥

बलयितचित्रचापविनिवारितपङ्क्तिमुखे

विसृजति राघवे विशिखवर्षममर्षवति ।

अरिषु न कश्चिदप्यथ निवृत्य गतः समरा-

दमरविलासिनीषु नच काचिदलब्धवरा ॥ ८२ ॥

अयञ्च पुनरञ्जनीसुतसमानीतमहीधरमहौषधिजीवितानजात्मसुखलब्धमनोरथः समेधमानमानसः समर;

कौतुककोपलब्धसंरम्भोदञ्चितपुलककञ्चुकिताकृतिर्दाशरथि-रधिसङ्गरममरसारथिना नीतमतिविशङ्कटङ्कमपि रथं क-ङ्कटमप्यनुग्रहाय शक्रतोऽग्रहीत्।

अन्योन्यस्य सदृश्वलक्ष्यमिलनाद्दालक्ष्यशौण्डीर्ययोः
शस्त्राशस्त्रिसमुन्मिषत्पुलकयोः सश्लाघयोः साहवे।
जाते जीवितसङ्कटेऽपि हसतो मूर्च्छासु विश्राम्यतो-
रश्रान्तं रघुवीरपङ्क्तिमुखयोरासीदसौमारणः॥ ८३॥

अथ तयोरश्रान्तमुक्तदिव्यास्त्रयोराखण्डलहस्तनिभयो-राल्लूनेषु मार्गणेषु अभङ्गुरपरस्परविजयमार्गणेषु बाणेषु विच्छिन्नेषु धनुर्गुणेषु अव्याहतसहजसाहसगुणनिकृत्तेषु धुरीणेषु यानेषु निरपायसमराभिहतिनिर्भिन्ने सांयुगीने च रथे परस्परगर्वङ्कषत्रिजयमनोरथमजायत भुजायतशोध-नमायोधनम्।

तूणी मुखात्त्वरितमुद्धरणे गुणेन
संयोजनेऽप्यथ शरस्य विमोचने वा।
यत्नावलोकितदशास्य इवातिवेगा-
ल्लोकेन राघवकरश्चिरमालुलोके॥ ८४॥

अर्द्धोदीरितवीरवादमहरद्रामो यदस्त्रैः क्षणात्
तेनैवाङ्कुरता मुखेन जगदे शेषश्च लङ्कापतेः।
साम्ये सत्यपि चातुरीभिरुभयोर्ज्ञानुष्कमायाविनो-
र्विच्छिन्नाननदर्शनेन समभूद् व्रीडास्पदं रावणे॥ ८५॥

दशाननशरक्षतिक्षरदसृग्गभीरोद्बुद्बुदै-
रलङ्कृतमहेन्द्रकण्टकसहस्रचक्षुःपथः।
रणे रघुकुलोद्वहः क्षणममानि वैमानिकै-

यथा दशग्रतिभणो बलदर्पा कषायेषणा: ॥ ८६ ॥

तदनु वारुणेन वैश्वानरं वैनतेयेन वातम्भयं वायव्येन वारिदनैशाकरेण तामिस्रं माहेन्द्रेण दानवं वैष्णवीयेन माहेश्वरञ्च परस्परमेवमस्त्रमस्त्रेण भिन्दानयोरनयोरनिशमाहवाग्रहादविदितान्यहानि सप्त व्यतीयुः ।

अस्त्रायस्मि सकौतुकोऽपि दयितां सञ्चिन्त्य चिन्ताकुला-
मस्त्रेण ज्वलता विधेरपुनरुत्थेषं निमिषेण सः ।
मूर्धः कर्त्तितान्मुहुर्मुहुरवच्छेदेऽपि लङ्कापते-
रातङ्केन समं समस्तजगतां चिच्छेद सीतापतिः ॥ ८७ ॥

रक्षःपतौ पतति लब्धमनोरथाना-
मातन्वतां दिविषदामथ पुष्पवर्षम् ।
श्लाघापदं समजनिष्ट परं न रामः
कामोऽपि चाकलितशूर्पणखाविकारः ॥ ८८ ॥

अनन्तरमालिङ्गितवसुन्धरं शरतल्पमधिशयानमधिगतनिषङ्गोपधानं यातुधानपतिमधिगत्य निपत्य च सोदर्यार्थ्यसौहार्दसुलभवैधुर्यः कदर्योऽहमिति विहितनिजदूषणो विभीषणश्चिरतरं विललाप ।

अयि समसुखदुःखैरन्वितं बन्धुवर्गैः
सहजमपि भवन्तं मुञ्चतः साहसेन ।
कुलविशसनहेतोः कूटधर्मानुवृत्ते-
र्दशमुख मम यावज्जीवमासीत्कलङ्कः ॥ ८९ ॥

आर्यस्य रक्षितुमसूननुजः स एकः
प्राणानमुञ्चत परं युधि कुम्भकर्णः ।
त्वज्जीवहृत् स्वयमहं मम जीवहेतो-

रघ्यापि हन्त सहते हतको विधिर्माम् ॥ ८० ॥

इत्येवमस्मिन् विलपति विदितवृत्तान्ता शुद्धान्तात्सकरुणमारटन्तीभिरन्तरितयूथपाभिः करिणीभिरिव तरुणीभिः समं समापत्य मध्ये समरमार्गनिततमशनिहतमिव मन्दरं दशकन्धरं समीक्ष्य निहतोपघ्नेव लता निपतन्ती विलपन्ती नाथ नाथेति विषादाहता दयितविधुरीकृतकुररीवा मन्दं चक्रन्द मन्दोदरी ।

या वीक्षिताजनि पुरा यमराजधानी
वीर त्वया निखिलदिग्विजयोत्सवेषु ।
तामद्य दुर्विधिबलेन समस्तलोक-
साधारणः पुनरुपैष्यसि हा किमेकः ॥ ८१ ॥

जनकः स्वयं दनुजवंशनायको
दयितो जगत्त्रितयजैत्रशासनः ।
तनयः पुरन्दरजयीति गर्विता
विधिनाहमेवमधुना विडम्बिता ॥ ८२ ॥

राजन्य धर्मविदुषोऽपि रघूद्वहस्य
हत्वा यथाग्रजमथानुज पट्टबन्धः ।
आरभ्य वालिनमयं कथमाविरासी-
दिक्ष्वाकुवंशसहजः कथमेष धर्मः ॥ ८३ ॥

अहह निहता लङ्का बालानलेन हनूमतः
परमवनिजा पातिव्रत्यानलेन भवानपि ।
सुखमहमिहासीना शोकानलेन यदीदृशे
प्रभवति न मां हन्तुं प्रायः स एष चितानलः ॥८४॥

तदहमिदानीं सायन्तनसमय इव सवितुः प्रभा भगवति

प्रविश्य जातवेदसि चन्द्रिकेव चन्द्रमसं तड़िदिव तड़िद्वन्तं भवन्तमनुसरन्ती निर्वापयामि निरन्तरविरहदहनदह्यमानमात्मानमित्यादिकरुणपरिदेवनवतीं प्रजावतीं निवर्त्य निवर्त्य च निशिचरपतेर्यथाविधि निजाज्ञया पितृमेधसमेतं सविधमेधमानविषादं विभीषणमशेषराज्याधिपतिं विधातुमखिलतीर्थोपहृतैरम्भोभिरम्भोधर इव दावानलाकुलं वनस्पतिं रघुपतिरभ्यषिञ्चत् ।

अथ दशरथनन्दनाभिषेका-
दधिगतराज्यपदो विभीषणोऽयम् ।
अनुदिनमभिवृद्धमण्डलोऽभू-
दरुणकरामृतपूरणादिवेन्दुः ॥ ९५ ॥

नीतामुदीक्ष्य निभृतेन विभीषणेन
सीतामुदारगुणशीलवतीं सतीनाम् ।
देवस्य तत्क्षणमभूद्दशकन्धरारे-
रानन्दशोकरसबन्धुरमन्तरङ्गम् ॥ ९६ ॥

तदनन्तरमरुन्धतीव पवित्रचारित्रनिधिरधिदेवता पतिदेवतानामनादिपुंसोऽपि मर्त्यधर्मणः प्रत्यायनाय नायकस्य पुरन्दरमुखान् वह्निमुखान् पुरस्कृत्य भगवन्तमरविन्दासनमिन्दुकलेव पुनरुदेष्यन्ती तपनमिव दहनमवजगाहे ।

प्राविशद्दर्चिषि परं निजशुद्धिहेतो-
र्देवी पवित्रचरिता जनकेन्द्रपुत्री ।
अग्निश्चिरं हि यदपावनवस्तुसङ्गात्
शुद्धं स्वयं तदमुना दमुना बभूव ॥ ९७ ॥

विशुद्धशीलामनलानुषङ्गाद्विदेहजां तत्र विलोक्य सीताम् ।
प्रभां पुनः प्रत्युषसीव पूषा प्रत्यग्रहीत् प्राग्रसरो रघूणाम् ॥ ९८ ॥

अथोदारधीरधिगतनिजप्रशंसाविधिना त्रिधिना पुरः प्रदृश्यमानं विमानाधिगतमहारथं दशरथं प्रणिपत्य प्रतिपाल्य च शिरसि तदनुशासनं पाकशासनवरप्रत्युज्जीवितैर्हरिभिरनुगम्यमानः प्रमोदमानमनाः सुग्रीवेण सह सम्भाषमाणो विभीषणं सकरुणमवलोकयन्ननुजेन च सीतया सममयोध्यामधिगन्तुकामो रामः खेचरं विमानमारुरोह किमपि कौवेरम् ।

आरुह्य पुष्पकमयं विदितानि तानि
लङ्कोपकण्ठदशकण्ठरणाङ्गणानि ।
सिन्धुं गभीरमपि सेतुनिबन्धनञ्च
सन्दर्शयन् मृगदृशं स जगाम रामः ॥ ९९ ॥

उपरि यथा यथा मणिविमानमुदञ्चति न-
स्तरणि तथा तथा विपुलतामुपयाति नभः ।
महीवलये तु पल्वलमवेक्ष्य महाम्बुनिधिं
पवनभुवे निवेद्य च हसन्ति परे हरयः ॥ १०० ॥

प्रिये विदेहराजनन्दिनि! विनतानन्दनमप्यतिशेते विमानवेगः ।

यद्यद्दूरे पुरः पश्यन्निच्छामि तव शंसितुम् ।
तत्तदन्वगपि द्रष्टुं लतृक्षणेनापवार्यते ॥ १०१ ॥

तरणि धरणीसुते पश्य ऋष्यमूकोऽयं विद्याधरीप्रम्पासर इदं कम्बुकण्ठिकबन्धनिबन्धनभूरियं करभोरुशरादिकलहस्थलमिदं मधुरालापिनि मम पर्णशालेयं

मत्तेभगामिनि! मायामृगमृगयावनमिदं कुटिलायतकबरि! गोदावरीयं कुम्भिकुम्भस्तनि! कुम्भसम्भवायतनमिदं विधुमुखि! विराधविध्वंसनवनमद्वीयं विपुलविलोचने! महामुनेरत्रेराश्रमपदमिदं विदेहराजपुत्रि! चित्रकूटोऽयमिति विविधाः कथाः कथयन्नेवायं भागीरथीपरिसरगतं भरद्वाजमुनेः प्रशान्तं पावनं तपोवनमायासीत्। अभाषत च मैथिलीम्।

प्रसृमरबर्हिनिश्वासपारणा सुखितः फणी।
कण्डूविनोदनीतकण्ठी कण्ठीरवनखैर्मृगः॥ १०२॥

तत्र भरद्वाजविहितविविधातिथेयः तथैव पदवीं द्वीयसीमतीत्य पुनरयोध्यासविधमासीदग्रत एव हनूमदावेदितोदन्तं समागच्छन्तं अरुन्धतीजानि पुरःसरमजस्रमानन्दाश्रुजलविलुलिता लोकैरमात्यलोकैः परिगतमतिपावनतपोधनव्रतमाजानभक्तिम्भरितं भरतमवलोकयन्नतिवत्सलमना विमानावरोहणाय दशकण्ठरिपुरुदकण्ठत।

यानं मदाशयमवेत्य यथायथैत
तारापथादवतरत्यवनौ कुमारि।
आवेदुषी सविधमद्य तथा तथाभू-
रत्यादरेण भवतीमभिगच्छतीव॥ १०३॥

इत्थं वदन् इन्दुमुखीं सलीलं देवः प्लवङ्गाधिपदत्तहस्तः।
विभीषणावेदितया पदव्या विमानतो मन्दमवारुरोह॥११४॥

प्रणीतमणिपादुकं प्रणतमग्रतः पादयो-
रुदस्य भरतं जवादुपनयन् भुजाभ्यान्तरम्।

अवेक्ष्य च तपः कृशं वपुरतीव वात्सल्यतो
नवं नवमिव स्पृशन् न विरराम रामश्चिरम् ॥१०५॥
पश्यन् ननन्द भरतः परिरभ्य दोर्भ्यां
सौमित्रिमार्यसमदुःखसुखं वनेऽपि ।
सोऽयं सुखोपनतराज्यपराङ्मुखाय
तस्मै पुनः सहजभक्तिपराङ्मुखाय ॥ १०६ ॥

अथ भरतोऽपि पुरतोऽभिवादितपूर्वजोपलालननिघ्नेन शत्रुघ्नेन समं सविनयं प्रणिपत्य जनकेन्द्रपुत्रीमुन्मनीकृत्य सुग्रीवदशग्रीवानुजादीन् सावरोधवधूकान् यथोचिताभिरुपचर्याभिरभ्यर्च्याभ्यर्चितपुरोहितमामन्त्रितमन्त्रिलोकमालोकानुगृहीत पौरवर्गमग्रजन्मानं विमानत एव सबहुमानमनयदुपनीतजनपरिश्रमं निजाश्रमम् । तत्र च सौमित्रि सीतासखो दाशरथिरतिलोभनीयवात्सल्यां कौशल्यामयशः शल्यजनितशोकातिरेकां कैकेयीमकृत्रिमस्नेहपरिप्लुतां सुमित्रामपि क्रमादभिवादयन्निजालोकरसमितान्तकन्दलितान्तरङ्गाभिरेताभिश्चन्द्र इव पयोधि वीचिकाभिः प्रतिक्षणं परिरभ्यमाणाभिः सलक्ष्मणः केवलमानन्दधुरमविन्दत ।

अथाखिलजगत्पतेरपि रघूद्वहस्यादरा-
द्विधातुमभिषेचनं विचलता गुरोराज्ञया ।
अनीयत समन्ततो हरिगणेन तीर्थं पुनः
विशङ्क्य हृदि मन्थरां न भजतागतिं मन्थराम् ॥१०७॥
अलङ्कृतः कृतमभिषेकमादरात्
अमात्यसंहतिभिरवाप्य राघवः ।

पुरोमुखः पुनरयमानशे रथं
मनोरथं स च भरतो महारथः॥ १०८॥

तत्र च सेवाविचक्षणाभ्यां लक्ष्मणशत्रुघ्नाभ्यामभितो विधूयमानधवलवालव्यजनः परिजनाचारनिरतभरतोद्धस्तमणिविमलमुक्तातपत्रो विचित्रोपजातमनुजवेशचारुभिरारूढ़शताङ्गमातङ्गैरलङ्कृतैराशरप्लवङ्गपतिभिरनुगम्यमानः प्रवर्त्यमानशेषाक्षतकुसुमलाजोपचार पौरपुरन्ध्री कदम्बसौरभं चलितमञ्जुमञ्जीरमणिकाञ्चीवलय वाचाटित दशदिगन्तरां वाद्यमानमाङ्गलिकभेरीमृदङ्गशङ्खादिकविविधारवश्रवणसमयोच्चलितसामोदपौरसम्बाधां सौधान्तरगवाक्षचलिततरुणीकटाक्षलेखानीलोत्पलदामतोरणाभिरामरथ्यां तथाविधामयोध्यामाजगाम रामचन्द्रः।

राज्यं स्वं समुपेयिवान् सविनयैराशेवितो भ्रातृभिः
सुग्रीवप्रमुखानपि प्रियसखान् स्वे स्वे पदे स्थापयन्।
स्वच्छन्दः सुचिरं सुखान्यनुभवन् देव्या तया सीतया
रामः पालयति स्म कीर्त्तिविभवैरामोदिनीं मेदिनीम् १०९

कोलालाख्यमहाग्रहारमहिता कल्पेन संख्यावतां
मूर्द्धन्येन विशारदेन विधुना श्रीसोमनाथोदये।
प्राग्भोजोदित पञ्चकाण्डमहितानन्दे प्रबन्धे पुनः
काण्डो निर्मित एकचूतपतिना षष्ठोऽपि जीयाच्चिरम्॥११०॥

इति श्रीलक्ष्मणकविविरचिते चम्पूरामायणे
युद्धकाण्डः समाप्तः।

४७ काव्यसंग्रह (सम्पूर्ण) ५
४८ लिङ्गानुशासन सटीक ।०
४९ ऋतुसंहार सटीक ।=
५० विक्रमोर्वशी सटीक १॥०
५१ वसन्ततिलकभाण ।=
५२ गायत्री व्याख्या ॥
५३ सांख्यदर्शन (भाष्यसहित) सांख्य प्रवचन भाष्य २
५४ भोज प्रबन्ध ॥।०
५५ नलोदय सटीक ॥=
५६ ईश केन कठ प्रश्न मुण्ड माण्डूक्य (सटीक सभाष्य) ५
५७ छान्दोग्य (उपनिषद्) सभाष्य सटीक ५
५८ तैत्तिरीय ऐतरेय श्वेताश्वतर (उपनिषद्) सभाष्य सटीक २
५९ बृहदारण्यक (उपनिषद्) सटीक सभाष्य १०
६० सुश्रुत वैद्यक ४
६१ शार्ङ्गधर (वैद्यक) १
६२ वेतालपञ्चविंशति ॥।०
६३ पातञ्जलदर्शन(सभाष्यसटीक)४
६४ आत्मतत्त्वविवेक(बौद्धाधिकार)२
६५ मुक्तिकोपनिषत् =
६६ उपमान चिन्तामणि ।०
६७ नागानन्द नाटक १
६८ पूर्णप्रज्ञ दर्शनम् (मध्वस्वामि (कृत भाष्य सहितम्) २
६९ चन्द्रशेखरचम्पूकाव्य सम्पूर्ण १
७० सामवेदस्य मन्त्र ब्राह्मणम् भाष्य सहितम् २
७१ आरण्यसंहिता भाष्यसहिता १
७२ विद्धशालभञ्जिकानाटिकासटीक १
७३ कारण्डव्यूह (बौद्धशास्त्रम्) २
७४ कुवलयानन्द सटीक अलङ्कार १
७५ प्रियदर्शिका नाटिका सटीक (श्रीहर्षविरचित) ॥०
७६ सारस्वत व्याकरण सटीक पूर्वार्द्ध १।०
७७ वासवदत्ता सटीक २
७८ (कालिदास कृत) पुष्पबाण विलास काव्य सटीक ॥०
७९ महिम्न शतकम्, पदारविन्द शतकम्, स्तुति शतकम् मन्दस्मित-शतकम् कटाक्षशतकम् १
८० मनुसंहिता कुल्लूकभट्ट कृत टीका सहित ५
८१ नैषधचरितम् (मल्लिनाथ कृतटीका सहित) १०
८२ चन्द्रालोक प्राचीन अलङ्कार ॥०
८३ वीरमित्रोदय(स्मृतिशास्त्र) १०
८४ भावप्रकाश (वैद्यक) १०
८५ प्रबोधचन्द्रोदय नाटक सटीक २
८६ अनर्घराघव नाटक (मुरारि कृत) २
८७ दैवतब्राह्मण सभाष्य ३

८८ षड्विंशब्राह्मणम् १
८९ मीमांसा परिभाषा ||०
९० अर्थसंग्रह (लौगाक्षीमीमांसा) ||०
९१ रघुवंश सटीक १||०
९२ मेघदूत सटीक |||०
९३ ईश्वरनिरूपणम् १
९४ ईश्वरानुमानचिन्तामणि (गङ्गेशोपाध्याय कृत) १
९५ न्यायदर्शन सभाष्य सवृत्ति २||०
९६ सटीक वाल्मीकिरामायण (बालकाण्डस्य प्रथमावधि पञ्चविंशति सर्गपर्य्यन्तम् १||०
९७ सटीक वाल्मीकिरामायण बालकाण्डस्य षड्विंश सर्गावधि सप्तपञ्चाशत् सर्गपर्य्यन्तम् १||०
९८ मदनपालनिघण्टु (वैद्यक) १
९९ संस्कृतशिक्षामञ्जरी प्रथमभाग—
१०० संस्कृतशिक्षामञ्जरी द्वितीयभागः |०
१०१ साहित्यदर्पणम् (अलङ्कार) १||०
१०२ श्रीहर्षचरित बाणभट्टकृत २
१०३ अमरकोष ||०
१०४ वेदान्तसूत्र शङ्कराचार्य्य कृत शारीरकभाष्य तथा गोविन्दानन्द कृत टीका सहित ११
१०५ वेदान्तपरिभाषा १
१०६ वेदान्तसार सटीक ३
१०७ सटीक निदान (वैद्यक) ४
१०८ कामन्दकी नीतिसार १
१०९ मल्लिकामारुतप्रकरण सटीक (दण्डिकवि कृत) २
११० अत्रि विष्णु, हारीत, याज्ञवल्क्य उशना अङ्गिरा यम आपस्तम्ब, संवर्त्त कात्यायन वृहस्पति पराशर व्यास शङ्ख लिखित दक्ष गौतम शातातप वशिष्ठ प्रणीत संहिता (धर्म्मशास्त्र) १५
१११ मत्स्यपुराण ६
११२ चरकसंहिता (वैद्यक) सम्पूर्ण १०
११३ रसेन्द्रचिन्तामणि तथा रसरत्नाकर (वैद्यक) ६
११४ भगवद्गीता शाङ्करभाष्य आनन्दगिरि कृत टीका तथा सुबोधिनी सहित ५
११५ शब्दशक्तिप्रकाशिका १
११६ मालतीमाधव सटीक १||०
११७ सटीक भट्टिकाव्य ४
११८ सटीक काव्यप्रकाश ४
११९ सभाष्यशाण्डिल्यसूत्र ||=
१२० लघुकौमुदीव्याकरणम् ||०
१२१ महानाटकम् (हनुमन्नाटक) १
१२२ दशरूपकम् (अलङ्कार) १||०
१२३ भोजचम्पू (भोजदेव कृत चम्पूरामायणम्) ३
१२४ भारतचम्पू सटीक ३

कलिकाता संस्कृत विद्यामन्दिरे—बि, ए, उपाधिधारिणः
श्रीजीवानन्द-विद्यासागर-भट्टाचार्यस्य सकाशात् लभ्यानि ।